डमरु डामरि नीलाम्बरे नीलविभूषणे।
नीलनागासने ततः सकलसुरासुरानिति ॥३७०॥
वशे कुरु कुरु तदा जन्यिके कन्यिके ततः।
सिद्धिदे वृद्धिदे ततो योगिनी कामिनी तथा ॥३७१॥
क्रोधस्मरौ शाकिनी च प्रासादं फट्कारं ततः।
वह्निजाया ततः पश्चादेकानंशे ततः परम् ॥३७२॥
वाग्भवं ब्रह्मवादिन्यै ब्रह्मरूपिण्यै द्विठस्तथा।
तदन्ते ब्रह्मरूपिणि तारत्रपारमास्मराः ॥३७३॥
असूया भगवति तथा नीललोहितेश्वरि ततः।
त्रिभुवनं रञ्जय रञ्जय सकलेति च ॥३७४॥
सुरासुरानाकर्षयाकर्षय हृदयं तदा।
वह्निजाया नीललोहितेश्वरि ततः परम् ॥३७५॥
वाणी तस्या सपत्नी च त्रिकालवेदिन्यै ततः।
वह्निजाया तदन्ते च त्रिकालवेदिनि ततः ॥३७६॥
वेदशिरश्च कमला भुवनेशी स्मरस्तथा।
कामिनी शाकिनी चैव क्रोधभस्त्रं ततः परम् ॥३७७॥
ब्रह्मवेतालराक्षसि काली महासूया तथा।
चण्डो विष्णुशवावतंसिके ततः परम् ॥३७८॥
योगिनी प्रेतबीजं च पीयूषं तदनन्तरम्।
महारुद्रकुणपारूढे मैधपाशौ ततः शृणु ॥३७९॥
प्रासादमस्त्रत्रितयं हृदयं वह्निवल्लभा।
कोरंगि तारवाण्यौ च रमा ह्रीं स्मर एव च ॥३८०॥
प्रासादक्रोधपाशाश्च योगिनी कामिनी ततः।
क्रोधश्च शाकिनी चैव काली मेघस्तथापरम् ॥३८१॥

वह्निजाया रक्तदन्ति हरपत्नी स्मरस्तथा ।
असूया शाकिनी चैव डाकिनी प्रलयस्तथा ॥३८२॥
फेत्कारी कर्णिका चैव हारः सानुस्तथैव च ।
इष्टिरस्त्रं वह्निजाया भूतभैरवि ततः परम् ॥३८३॥
वाणी रमा पाशकला हृदयं तदनन्तरम् ।
ततः पश्चात् षडाम्नायं परिपालिन्यै ततो वदेत् ॥३८४॥
शोषिण्यै द्राविण्यै ततो नामक्यै भ्रामक्यै ततः ।
जूं बीजं ब्लुं बीजं चैवमादित्यमोकारयुक्तकः ॥३८५॥
कुलकोटिन्यै ततः काकासनायै शाकिनी ततः ।
अस्त्रं द्विठः कुलकुट्टिनि ततस्तारं स्मरस्तथा ॥३८६॥
पीयूषं भुवनेशी च कामिनी क्रोध एव च ।
शाकिनी योगिनी चैव ततश्चण्डं शृणु प्रिये ॥३८७॥
कामाख्यायै फट्कारं च शिरः कामाख्ये ततः परम् ।
मैधपाशौ प्रासादश्च प्रेताङ्कुशकाला अपि ॥३८८॥
चतुरशीतिकोटिमूर्त्तये तदनन्तरम् ।
विश्वरूपायै ब्रह्माण्डजठरायै तारं ततः ॥३८९॥
स्वाहा विश्वरूपे पाशकाले वामकर्णस्ततः परम् ।
ऐं औं क्षेमङ्कर्य्यै ततो द्विठः क्षेमङ्करि ततः ॥३९०॥
वाण्यागमशिरोमायाकन्दर्पास्तदनन्तरम् ।
निगमागमबोधिते सद्योधनपदं ततः ॥३९१॥
भगवति कुलेश्वरि ततः क्रोधास्त्रद्विठकाः ।
कुलेश्वरि वाग्भवश्च कामबीजं ततः परम् ॥३९२॥
ततो जगदुन्मादिन्यै ङेऽन्ता कामङ्कुशा ततः ।
विश्वविद्राविणी ङेऽन्ता स्त्रीपुरुषमोहिनी च ॥३९३॥

चतुर्थ्यन्तां समाभाष्य मायाक्रोधाबलास्तथा ।
वह्निस्त्री च ततः पश्चात्कामाङ्कुशे पदं ततः ।।३९४।।
तारं च हृदयं चैव सर्वधर्मध्वजां ततः ।
ङन्तामुच्चार्य्य ततः सकलसमयाचारेत्यपि ।।३९५।।
बोधितायै ततः क्रोधमावेशिन्यै ततः परम् ।
अस्त्रस्वाहे ततः पश्चादावेशिनि पदं ततः ।।३९६।।
तारत्रपारमाकामयोगिनीकामिनो तथा ।
डाकिनी क्रोधमस्त्रं च करालिनि पदं ततः ।।३९७।।
मायूरिशिखिपिच्छिकाहस्ते सद्यो धनं पदम् ।
खेचरी मेघनाङ्गना ऋक्षकर्णि पदं ततः ।।३९८।।
जालन्धरि पदमाभाष्य मा मां द्विषन्तु शत्रवः ।
नन्दयन्तु भूपतयो भयं मोचय ततः परम् ।।३९९।।
क्रोधास्त्रं वह्निजाया च मायूरिपदमेव च ।
तारमैधामृताङ्कुशा इन्द्राक्षि तदनन्तरम् ।।४००।।
क्रोधास्त्रत्रयमाभाष्य वह्निजाया ततः परम् ।
इन्द्राक्षिपदमाभाष्य काल्यङ्कुशौ ततः परम् ।।४०१।।
हयग्रीवस्ततः सिद्धो मायाचण्डस्ततः घोणकि ।
घोणकिमुखि तुभ्यं नमः स्वाहा ततः [परम्] ।।४०२।।
घोणकि वाक्त्रपापद्माक्रोधकामाश्च शाकिनी ।
योगिनी शाकिनी चैव फेत्कारी तदनन्तरम् ।।४०३।।
भीमादेवि भीमनादे भीमकरालि ततः परम् ।
महाप्रलयचण्डलक्ष्मीः सिद्धेश्वरि ततः परम् ।।४०४।।
जीवहीनं पराकूटं बृहत्कूटमतः परम् ।
रथन्तरं ततः कूटं महाघोरेति संवदेत् ।।४०५।।

घोरतरे भगवति भयहारिणि तत्परम् ।
मां द्विषतो विभाष्यैव निर्मूलययुगं वदेत् ।।४०६।।
विद्रावययुगं चोक्त्वा उत्सादययुगं ततः ।
ततो महाराज्यलक्ष्मीं वितरयद्वयं हरेत् ।।४०७।।
देहियुग्मं दापययुगं डाकिनी प्रलयस्तथा ।
अमृतप्रेतप्रासादा.................ततः परम् ।।४०८।।
क्रोधक्षेत्रपदस्त्राश्च प्रासादस्तत एव च ।
जययुग्मं राक्षसक्षयकारिणि वदेत्ततः ।।४०९।।
तारत्रपा क्रोधास्तदा त्रिठान्तं व्यस्त्रमेव च ।
हृच्छिरसी तदनु भीमादेवी तथापरम् ।।४१०।।
तारवाणीरमामायाक्रोधशाकिन्य एव च ।
डाकिनी प्रलयश्चैव फेत्कारी फंकारं तथा ।।४११।।
प्रविश संसारं तदनु महामाये ततः परम् ।
फें फडिति समाभाष्य ब्रह्मशिरोनिकृन्तनि ।।४१२।।
विष्णुतनुनिर्दलिनि जे जंभिके ततः परम् ।
स्तें स्तम्भिके छिन्दियुगं भिन्दि दह युगं युगम् ।।४१३।।
मथयुग्मं पचयुग्मं पञ्चशवारूढ़ ततः ।
पञ्चागमप्रिये ततोऽमृतं दस्त्रं च खेचरी ।।४१४।।
रमा कामस्तथा संविः पञ्चपाशुपतेत्यपि ।
अस्त्रधारिणि संप्रोच्य क्रोधत्रितयमेव च ।।४१५।।
अस्त्रद्वयं वह्निजाया ब्रह्मनिकृन्तनि ततः ।
वाक्यांशवेदशिरसस्ततो हृदयमेव च ।।४१६।।
परशिवविपरीताचारकारिणि ततः परम् ।
ह्रीरमाकामयोगिनीकामिन्यस्तत एव हि ।।४१७।।

महाघोरविकरालिनि खण्डार्द्धशिरोधारिणि ।
ततोऽपि भगवत्युग्रे शाकिनी डाकिनी तदा ॥४१८॥
प्रलयफेत्कार्यै च कूटं प्राभातिकं ततः ।
वाराहिकं ततः कूटं क्रोधास्त्रे वह्निवल्लभा ॥४१९॥
भुवनेशी ततः क्रोधमर्द्धमस्तके ततः परम् ।
कालो तारश्च क्रोधं च शाकिनी कामिनी तदा ॥४२०॥
चण्डबीजं ततश्चण्डखेचरि ज्वलयुग्मकम् ।
प्रज्वलद्वितयं चैव निर्म्मांसदेहे नमः ॥४२१॥
द्विठश्चण्डखेचरि हि वेदादिर्नम एव च ।
प्रचण्डघोरदावानलबासिन्यै ततः परम् ॥४२२॥
ह्रीं ह्रूं समयविद्या कुलतत्त्वधारिणी च ।
ङेऽन्ता ज्ञेया ततः पश्चान्महामांसरुधिरप्रिया ॥४२३॥
चतुर्थ्यन्ता समाज्ञेया योगिनी वोजमेब च ।
कामिनी कामवीजं च धूमावत्यै ततः परम् ॥४२४॥
सर्वज्ञाता सिद्धिदायै शाकिन्यस्त्रं शिरस्तथा ।
ततो धूमावति पश्चाद्वाक्त्रपा पाशमेव च ॥४२५॥
ह्लां सौः क्लीं महाभोगिराजभूषणे ततः परम् ।
सृष्टिस्थितिप्रलयकारिणि तदनन्तरम् ॥४२६॥
हूं हूंकारनादभूरितारिणि भगवति ततः ।
हाटकेश्वरि ततः पश्चादमृतं तदनन्तरम् ॥४२७॥
दस्रानन्दौ रौद्रबीजं रमावाग्भवचण्डकाः ।
शाकिनी डाकिनी चैव मम शत्रूनिति स्मरेत् ॥४२८॥
मारय बन्धय द्वौ द्वौ मर्दययुगलं तथा ।
पातययुगलं चैव ततः पश्चान्महेश्वरि ॥४२९॥

धनधान्यायुरारोग्यैश्वर्य्यं ततो देहिद्वयम् ।
दापययुगलं चैव मानसं तदनन्तरम् ॥४३० ॥
पविकापालभारुण्डाः प्रासादं बीजमेव च ।
पाशमङ्कुशवाण्यौ च तारं हृद्वह्निवल्लभा ॥४३१॥
ह्राटकेश्वरि तदनु वेदादिः पाशमेव च ।
वाणीह्रीकमलाश्चैव शक्तिसौपर्णि तत्परम् ॥४३२॥
कमलासने समुच्चार्य्यं उच्चाटय द्वयं ततः ।
विद्वेषय द्वयं चैव क्रोधास्त्रे वह्निसुन्दरी ॥४३३॥
शक्तिसौपर्णि तदनु तारवाण्यौ त्रपा ततः ।
कमलाकामरुषश्चैव योगिनी कामिनी ततः ॥४३४॥
शाकिनी डाकिनी चैव प्रलयः फेत्कारी तथा ।
मणिमेखला तदनु हारसानू ततः परम् ॥४३५॥
भगवति महामारि जगदुन्मूलिनि ततः ।
कल्पान्तकारिणि तदा शिरोनिविष्टवामचरणे ॥४३६॥
दिगम्बरि ततः पश्चात् समयेति ततः परम् ।
ततः कुलचक्रचूडालये मां रक्ष रक्षेति ॥४३७॥
त्राहियुग्मं पालय युगं प्रज्वलदावानलेत्यपि ।
ज्वालाजटालजटिले ततो हं त्रयमाहरेत् ॥४३८॥
हृदयं वह्निजाया च महामारि ततः परम् ।
वेदादिश्च वाणी चैव रक्ताम्बरे तदनन्तरम् ॥४३९॥
रक्तस्रगनुलेपने महामांसरक्तप्रिये ।
महाकान्तारे तदनु मां त्राहिद्वन्द्वं ततः परम् ॥४४० ॥
रामाकामत्रपाक्रोधशाकिन्योऽस्त्रं शिरस्तथा ।
मङ्गलचण्डि तदनु मायास्त्रं हृदयं तथा ॥४४१॥

चण्डोग्रकालिनि ततः परमशिवशक्ति हि ।
सामरस्य ततः पश्चान्निर्वाणदायिनि ततः ॥४४२॥
नरकङ्कालधारिणि ब्रह्मविष्णुकुणपवाहिनि ।
वाणो वेदशिरश्चैव शाकिनी तदनन्तरम् ॥४४३॥
ततः प्रत्यक्षं परोक्षं मां द्विषन्ति ये तानपि ।
हनयुग्मं नाशययुग्मं कुष्माण्डडाकिनी तदा ॥४४४॥
स्कन्दवेतालभयं नुदयुग्मं ततः परम् ।
कोकामुखि च तदनु स्वाहा तारं त्रपा ततः ॥४४५॥
मदनः शाकिनी चैव क्रोधं तारं त्रपा ततः ।
क्रोधबीजं ततः पश्चात् श्मशानेति वदेत् सुधीः ॥४४६॥
शिखाचारिण्यै भगवत्यै ज्वालाकाल्यै ततः परम् ।
योगिनी कामिनो चैव शाकिनी कालिकापि च ॥४४७॥
चण्डास्त्रहृच्छिरसां ज्वालाकालि तथापरम् ।
वाणी च कमलाकामपाशाङ्कुशाश्च कालिका ॥४४८॥
अतिचण्डं योगिनी च कामिनी तदनन्तरम् ।
ततो घोरनादकालि सिद्धि मे देहि तत्परम् ॥४४९॥
सर्वं विघ्नमुपशमय सिद्धिकरालि तथापरम् ।
ततः सिद्धिविकरालि क्रोधयुगं वदेत्ततः ॥४५०॥
फट् स्वाहा घोरनादकालिपदं माया ततः ।
क्रोधं च शाकिनी चैव डाकिनी योगिनी तथा ॥४५१॥
उग्रकाल्यै खेचरीसिद्धिदायिन्यै ततः परम् ।
परापरकुलचक्रनायिकायै वदेत्ततः ॥४५२॥
अमृतं गारुडं चैव कामिनोक्षेत्रपालिनी ।
कन्दर्पस्त्रिशूलझंकारिण्यै नमः स्वाहा ततः ॥४५३॥

उग्रकालि ततः पश्चात्प्रासादं प्रेतमेव च ।
आदित्यौकारयुक्तश्च काली माया ततः परम् ॥४५४॥
शाकिनी चण्डरुषश्चैव चास्त्रं वेतालकालि हि ।
कमला भुवनेशी च वाणीमन्मथकालिकाः ॥४५५॥
भगवति संहारकालि ब्रह्माण्डं च पिषद्वयम् ।
चूर्णययुगलं मां रक्षद्वयं ततः परम् ॥४५६॥
काल्घनरुषश्चैव क्रोधास्त्रद्वितयं पुनः ।
हृदयं वह्निजाया च संहारकालि तत्परम् ॥४५७॥
तारवाग्भवमायाश्च रमा मीनध्वजस्ततः ।
महाघोरविकटरूपायै तदनन्तरम् ॥४५८॥
ज्वलदनलवदनायै सर्वज्ञतासिद्धिदायै ।
कालीशाकिनीक्रोधाश्च हृदस्त्रं वह्निसुन्दरी ॥४५९॥
रौद्रकालि ततः पश्चात् शाकिनीबीजमुत्तमम् ।
चण्डाट्टाहसिनि ततो डाकिनी तदनन्तरम् ॥४६०॥
ब्रह्माण्डमर्दिनि ततः प्रलयश्च ततः परम् ।
ब्रह्मविष्णुशिवभक्षिणि तत्परं स्मृतम् ॥४६१॥
फेत्कारी मृत्युमृत्युदायिनि ततः परम् ।
नक्षत्रकूटं तदनु भक्तसिद्धिविधायिनि ॥४६२॥
संबुद्धिपदमुच्चार्य्यं कूटं वाराहिकं ततः ।
भगवति कृतान्तकालि तदनु क्रोधमस्त्रकम् ॥४६३॥
कुण्डलाख्यं ततः कूटं हृदस्त्रवह्निवल्लभाः ।
कृतान्तकालि तदनु तारवाणीरमास्मराः ॥४६४॥
शाकिनी कालिका चैव योगिनी कामिनी तथा ।
क्रोधं भीमकालि च कालीद्वयं ततः परम् ॥४६५॥

महाक्रोधं गारुडं च पन्नगस्तदनन्तरम् ।
प्रेतशिवपर्यंकशायिनि पदमेव च ॥४६६॥
महाभैरवविनादिनि पदमेतत्ततः परम् ।
पशुपाशं मोचय मोचयेति वदेत्सुधीः ॥४६७॥
कामिनी शाकिनी चैव खेचरी चण्ड एव च ।
चण्डकालि क्रोधबीजं फट्द्वयं तदनन्तरम् ॥४६८॥
चण्डकालिपदं चैव औंकारस्थो दिवाकरः ।
दस्रश्च ब्रह्मभारुण्डौ कलाबीजमतः परम् ॥४६९॥
धनकालि धनप्रदे धनं मे देहि दापय ।
कालिकाशाकिनीक्रोधास्ततो विषधरेत्यपि ॥४७०॥
वज्रिणि कामबीजं च रमाहृद्वह्निवल्लभाः ।
धनकालि ततः पश्चात्तारभूतौ ततः परम् ॥४७१॥
सुदीर्घकूटं तदनु मेघो विद्युत्ततः परम् ।
घोरकालि ततः पश्चाद्विश्वं वशीकुरु ततः ॥४७२॥
पुनर्वशीकुरु सर्वं काव्यं साधय द्वयमेव च ।
करालि विकरालि वै योगिनी स्त्री च शाकिनी ॥४७३॥
प्रेतारूढे प्रेतावतंसे त्रपा रमा स्मरस्तथा ।
राजानं तदनुस्मृत्य मोहययुगलं ततः ॥४७४॥
क्रोधास्त्रहृदयाश्चैव घोरकालि ततः परम् ।
बाणो त्रपा रमा कामा योगिनी कामिनी तथा ॥४७५॥
शाकिनी कालिकास्त्रे च द्विठः मंत्रागकालि वै ।
कालीयुग्मं मायायुग्मं क्रोधयुग्मं ततः परम् ॥४७६॥
लेलिहानरसनाकराले तदनन्तरम् ।
रोरूयमानसजीवशिवानक्षत्रमाले च ॥४७७॥

योगिनी स्त्री शाकिनी च प्रेतकालि ततः परम् ।
भगवति भयानके मम भयं ततः परम् ॥४७८॥
अपनय ततः स्वाहा प्रेतकालि ततः परम् ।
तारवाणीत्रपाक्रोधा रतिरानन्द एव च ॥४७९॥
खेचरी च गौरी चैव शाकिनी प्रलयकालि वै ।
प्रलयकारिणि ततो नवकोटि ततः परम् ॥४८०॥
कुलाकुलचक्रेश्वरि दानवः कुर्म्म एव च ।
ब्लूंकारं म्लैंकारं चैव द्रावणं च ततः परम् ॥४८१॥
परमशिवतत्त्वसमयप्रकाशिनि च ।
बिन्दुद्वयान्वितं बीजं जयाख्यं तदनन्तरम् ॥४८२॥
अस्त्रस्वाहा तदनु प्रलयकालि तथा परम् ।
पाशकालीकामरमावाग्भवाश्च ततः स्मृताः ॥४८३॥
विभूतिकालि तदनु सम्पदं मे पुनस्तथा ।
वितरद्वयं सौम्या भव वृद्धिदाभव ॥४८४॥
सिद्धिदा भवेति च जयद्वयं तथापरम् ।
जीवद्वन्द्वं च अंवोजं कापालदक्षनेत्रकौ ॥४८५॥
मानसं चैव स्थाणुं च पविरेंकारमेव च ।
भारुण्डं ठद्वयं चैव फट्कारत्रयमेव च ॥४८६॥
हृदयं वह्निजाया च तारत्रयमतः परम् ।
विभूतिकालि तदनु तारांकुशत्रपास्ततः ॥४८७॥
स्मरश्च योगिनी चैवं शाकिनीस्त्रीरमास्तथा ।
वाग्भवं जयकालि वै परमचण्डे ततः परम् ॥४८८॥
महासूक्ष्मविद्यासमयप्रकाशिनि तथा परम् ।
क्ष्रौंकारं प्लुंकारं चैव व्फ्लुंकारं तदनन्तरम् ॥४८९॥

हृद्वह्निपत्नी तदनु जयकालि ततः परम् ।
वाग्भवं कमला चैव वेदमस्तकमेव च ॥४९०॥
गुरुभिरन्वितं बीजं फ्रंकारं सप्त चोद्धरेत् ।
भोगकालि ततः पश्चात् फेत्कारी तदनन्तरम् ॥४९१॥
त्रेताबीजं फट्त्रयं च स्वाहा भोगकालि ततः ।
क्रोधं च हृदयं चैव कल्पान्तकालि तत्परम् ॥४९२॥
भगवति भीमरावे कान्तं पान्तस्थमेव च ।
रेफसंस्थं चान्तवर्णं वामकर्णविभूषितम् ॥४९३॥
तदन्ते विनियोज्यैवं नादबिन्दुसमन्वितम् ।
इन्द्रारूढो मकारादिवामनेत्रविभूषितम् ॥४९४॥
नादबिन्दुसमायुक्तं द्वितीयं बीजमुद्धरेत् ।
पपञ्चमो वह्निसंस्थो वामनेत्रेण भूषितः ॥४९५॥
सनादं तार्त्तीयबीजं मेघमाले ततः परम् ।
महामारीश्वरि ततो विद्युत्कटाक्षे ततः परम् ॥४९६॥
अरूपे बहुरूपे च विरूपे च ततः परम् ।
ज्वलितमुखि तदनु चण्डेश्वरि तथापरम् ॥४९७॥
सानुः द्रावणः स्वाहा च कल्पान्तकालि तत्परम् ।
तारं च योगिनी चैव क्ष्वेडं वामाक्षिसंयुतम् ॥४९८॥
कला ब्लंकारं च डामरमुखि तत्परम् ।
वज्रशरीरे तदनु क्रोधबीजं ततः परम् ॥४९९॥
सन्तानकालि तदनु फट्कारं द्विठमेव च ।
पुनर्मन्थानकालि च तारबीजं त्रपा ततः ॥५००॥
क्रोधबीजं धर्मकूटं कूटं कुन्दाख्यमेव च ।
ततो वैहायसीकूटं वायवीयकूटं ततः ॥५०१॥

भारुण्डाख्यं ततः कूटं दुर्ज्जयकालि तत्परम् ।
हट्टायुधधारिणि वज्रशरीरे ततः परम् ॥५०२॥
इष्टिबीजं सानुबीजं भारुडण्स्थोऽनलस्तदा ।
कालविध्वंसिनि ततः कुलचक्रराजेश्वरि ॥५०३॥
सर्वैश्च गुरुभिर्युक्तं स्त्रीबीजं नव चोद्धरेत् ।
फट्त्रयं वह्निजाया चं दुर्ज्जयकालि तत्परम् ॥५०४॥
वाणीपाशकलावामकर्णमायारमास्मराः ।
क्रोधं घोराचाररौद्रे महाघोरवाडवेति ॥५०५॥
सन्धिङ्कृत्वा ततोऽग्निं च ग्रसद्वयमतः परम् ।
महाबले महाचण्डयोगेश्वरि नमो द्विठः ॥५०६॥
कालकालि ततो वाणी चामुण्डा तदनन्तरम् ।
ततः पश्चाद्विरिञ्चिश्च महारुद्रान्तमस्तकः ॥५०७॥
ततः पयोबीजं वज्रकालि महाबले ।
धृतिबीजं ततः पश्चान्नारसिंहं ततः परम् ॥५०८॥
सद्यो महाप्रपञ्चरूपे रौषिकानलमित्यपि ।
पतयुग्मं फेरुमुखि ततः पश्चाच्छृणुष्व मे ॥५०९॥
योगिनी डाकिनी खेचरी भूचरी सुरूपिणी ।
तदनु चक्रसुन्दरि महाकालि तथापरम् ॥५१०॥
कापालि तदनुस्मृत्य च मध्यं वह्निर्वीजकम् ।
कलाबिन्दुयुतं स्मृत्वा तान्तस्य च तथैव च ॥५११॥
मणिमेखला तदनु कहद्वयं ततः परम् ।
त्वां प्रपद्ये तुभ्यन्नमः स्वाहा वज्रकालि ततः ॥५१२॥
तारमैधत्रपालक्ष्मीस्मरास्तथा शृणुष्व मे ।
ततः सिद्धियोनि महाराविणि तदनन्तरम् ॥५१३॥

ततः परम्गुह्यातिगुह्यमङ्गले ततः परम् ।
विद्याकालि ततस्त्यष्टा लाङ्गूलं काकिनी ततः ॥५१४॥
उदुम्बरसुदशनो चान्तस्थः कान्त एव च ।
नदवामकर्णयुक्तं रान्तस्थः काल एव च ॥५१५॥
असुरो योगिनी चैव धीवरी च स्वरूपिणी ।
तथैव शवरी पोवरी च तथा शृणु ॥५१६॥
चर्च्चिके भक्षिके तदनु रक्षिके तदनन्तरम् ।
हर्षबीजं ततः पश्चादहर्षं तदनन्तरम् ॥५१७॥
ठत्रयं फट्त्रयं चैव नमः स्वाहा ततः परम् ।
विद्याकालि ततः पश्चात्तारपाशकलास्तथा ॥५१८॥
वाणीभारुण्डकापाला ग्रीं म्रूं म्रैं म्लौं तथा ।
कान्तचान्तचकारान्ता वह्निचामुण्डाश्च पार्वति ॥५१९॥
षष्ठस्वरसमायुक्ता नादबिन्दुविभूषिता ।
ममध्यं रेफबीजं तु कलाबीजममन्वितम् ॥५२०॥
चतुर्दशस्वरोपेतं यान्तं बिन्दुविभूषितम् ।
मौं बीजं तदनुस्मृत्य स्वाहा शक्तिकालि ततः ॥५२१॥
तारं च फेत्कारीकूटं हृदयं तदनन्तरम् ।
चण्डातिचण्डे तदनु मायाकालि ततः परम् ॥५२२॥
कालवञ्चनि तदनु महाङ्कुशे ततः परम् ।
नन्दनाख्यं ततः कूटं पातालनाग चेत्यपि ॥५२३॥
वाहिनि गगनग्रासिनि ब्रह्माण्डनिष्पेषिणि ततः ।
हं त्रयश्च मनस्त्रयं क्रोधत्रयं ततः परम् ॥५२४॥
तारं माया क्रोधं चैव चामुण्डा डाकिनी ततः ।
महाचण्डवज्रिणि च भ्रमरि भ्रामरि ततः ॥५२५॥

महाशक्ति ततश्चक्रकर्त्तरी तदनन्तरम् ।
कुलार्णवचारिणी च फिंकारं फांकारं ततः ॥५२६॥
फें फूं फौं समयेति विद्यागोपिनि तत्परम् ।
किरीटी ताण्डवी हंसी कूटत्रयमतः परम् ॥५२७॥
महाकालि ततः पश्चात् समयलाभं ततः परम् ।
कुरुद्वन्द्वं ततो विद्यां प्रकाशयद्वयं ततः ॥५२८॥
सिद्धो माया चण्डबीजं धर्मबीजं तथा परम् ।
ह्लौं बीजं च जयोबीजं गौरीबीजं तथैव च ॥५२९॥
अस्त्रं च वह्निपत्नी च महाकालि ततः परम् ।
वाग्भवश्च ततः पश्चात्परापरेति संवदेत् ॥५३०॥
रहस्यसाधिके ततः कुलकालि ततः परम् ।
शाकिनो योगिनी चैव कामिनीह्लीरुषस्तथा ॥५३१॥
स्मरामृतं लाङ्गूलं च मस्थः क्षेत्रपाली ततः ।
बिन्दुद्वयेन संयुज्य त्र्यस्त्रं तत्र चाहरेत् ॥५३२॥
कुलकालि ततः पश्चात्तारमायास्मरास्तथा ।
क्रोधं च शाकिनी चैव परापरपरमेत्यपि ॥५३३॥
रहस्यकाली कुलक्रमपरम्पराप्रचारिणि ततः ।
भगवति नादकालि करालरूपिणि ततः ॥५३४॥
मनःकूटं शाकिनी च डाकिनी प्रलयस्तथा ।
फेत्कारीबीजं तदनु मम शत्रूनिति वदेत् ॥५३५॥
मर्दययुगलं चैव चूर्णययुग्ममेव च ।
पातयद्वन्द्वं नाशययुगं भक्षयद्वितयं तथा ॥५३६॥
खेचराख्यं महाकूटं पावित्राख्यं ततः परम् ।
कूटं गजघटाख्यं हि श्रृंखलाकूटमेव च ॥५३७॥

दण्डाख्यकूटं तदनु नवकोटि ततः परम् ।
कुलाकुलचक्रेश्वरि ततः पश्चाद्वदेत्सुधीः ॥५३८॥
सकलगुह्यानन्ततत्त्वधारिणि तदनन्तरम् ।
कूँ चूँ टूँ तूँ पूं मां क्रपय द्वितयं तथा ॥५३९॥
त्रपा क्रोधं शाकिनी च योगिनो कामिनी तथा ।
अस्त्रं च वह्निपत्नी च नादकालि ततः परम् ॥५४०॥
तारं च शाकिनी चैव चतुरशीति तत्परम् ।
कोटिब्रह्माण्ड तदनु सृष्टिकारिणि तत्परम् ॥५४१॥
प्रज्वलज्वलनलोचने वज्रसमदंष्ट्रायुधे ।
दुर्निरीक्ष्याकारे तदनु भगवति ततः परम् ॥५४२॥
मुण्डकालि ततः पश्चात् कहद्वन्द्वं तुरुद्वयम् ।
दमयुग्मं चटयुग्मं प्रचटयुगलं ततः ॥५४३॥
हरिहराख्यं तत्कूटं कूटं कूटाख्यमेव ।
पत्रकूटं ततः पश्चात् सर्वसिद्धि देहि द्वयम् ॥५४४॥
सर्वैश्वर्य्यं तदनु दापययुगलं ततः ।
विद्युदुज्ज्वलजटे वै विकटसटे च ततः ॥५४५॥
महाविकटकटे च त्रपाकामक्रोधास्तथा ।
योगिनी कामिनी चैव शाकिनी हृदयं द्विठः ॥५४६॥
मुण्डकालि ततः पश्चात्तारं वाग्भव एव च
पाशरमाकामत्रपामहाक्रोधास्ततः परम् ॥५४७॥
ततो दस्रस्तथा स्ह्फ्यूँ च चौंकारं क्वींकारं तथा ।
धूमकालि ततः पश्चात्सर्वमेवेति तत्परम् ॥५४८॥
मे वशं च कुरुद्वन्द्वं पाहियुग्ममतः परम् ।
जम्भिके करालिके ततः पूतिके घोणिके ततः ॥५४९॥

खं त्रयमस्त्रहृदये धूमकालि ततः परम् ।
वाण्यङ्कुशौ शाकिनी च योगिनी काम एव च ॥५५०॥
आज्ञाकालि ततः पश्चान्ममाज्ञां राजान इत्यपि ।
ततः शिरसा धारयन्तु क्रोधमस्त्रशिरस्तथा ॥५५१॥
ततः परमाज्ञाकालि तारत्रपे तथैव च ।
चण्डबीजं ड्रींकारं च ड्रैंकारं तिग्मकालि च ॥५५२॥
तिग्मरूपे तिग्मातितिग्मे भ्रमं मोचयेत्यपि ।
स्वं प्रकाशय स्वाहा तिग्मकालि ततः परम् ॥५५३॥
तारं वाणी त्रपा चैव योगिनी कामिनी तथा ।
शाकिनी कमला कामक्रोधस्तथा महाकालि ॥५५४॥
लेलिहानरसनाभयानके ततः परम् ।
घोरतरदशनचर्वितब्रह्माण्डे ततः ॥५५५॥
चण्डयोगेश्वरीशक्तितत्त्वसहिते ततः ।
गाँ जाँ डाँ दाँ राँ प्रचण्डचण्डिनि सद्यो धनं ततः ॥५५६॥
महामारी सहायिनि भगवति भयानके ।
चामुण्डा योगिनी ततो डाकिनी शाकिनी तथा ॥५५७॥
भैरवीमातृगणमध्यगे तदनन्तरम् ।
जयद्वन्द्वं कहयुग्मं हसद्वयं ततः परम् ॥५५८॥
प्रहसयुगलं जम्भयुग्मं तुरुयुगं तथा ।
धावद्वयं श्मशानवासिनि तदनन्तरम् ॥५५९॥
शववाहिनि नरमांसभोजिनि ततः परम् ।
कङ्कालमालिनि ततः फेंकारत्रयमेव च ॥५६०॥
तुभ्यं नमो नमः स्वाहा महारात्रिकालि ततः ।
फेत्कारी च भगवति संग्रामकालि तत्परम् ॥५६१॥

संग्रामे जयमेत्रोक्त्वा देहियुग्मं वदेत्ततः ।
मां द्विषतो मम वशे कुरुद्वयं स्मरेत्सुधीः ॥५६२॥
पाँ पीँ पूँ पैँ पौँ ततश्च ज्वलद्वयं ततः परम् ।
प्रज्वलद्वितयं चैव विद्युत्केशि ततः परम् ॥५६३॥
पातालनयनि तदा ब्रह्माण्डोदरि तत्परम् ।
महोत्पातं प्रशमययुगं मायाक्रोधौ ततः ॥५६४॥
योगिनी कामिनी चैव शाकिनी हृदयं द्विठः ।
संग्रामकालि तदनु वाग्भवः शाकिनी तथा ॥५६५॥
योगिनी क्रोधः क्षेत्रपालीबीजं ततः परम् ।
नक्षत्रनरमुण्डेति मालालङ्कृतायै तदा ॥५६६॥
चतुर्दशभुवनसेवितपादपद्मा ङेन्ता ।
भगवत्यै शवकालिकायै ततः परं शृणु ॥५६७॥
यकारादिक्षकारान्ता वामकर्णविभूषिताः ।
नादबिन्दुसमायुक्ता नवबीजानि चोद्धरेत् ॥५६८॥
दुष्टग्रहनाशिन्यै च शुभफलदायिन्यै च ।
रुद्रासनायै तदनु सानुबीजं समाचरेत् ॥५६९॥
समेखलाजलं चैव हं खं वारत्रयं वदेत् ।
क्रोधत्रयं ठान्तत्रयं फट्त्रयं हृदयं द्विठः ॥५७०॥
शवकालि ततः पश्चाद्वाणी त्रपा तथापरम् ।
सर्वदीर्घयुतं क्रञ्च नादबिन्दुसमन्वितम् ॥५७१॥
पूर्वसंध्यक्षरे हीनं नादहीनं तथा प्रिये ।
क्रमेण षष्ठबीजानि वह्निस्थः क्षेत्रपस्तथा ॥५७२॥
वमदग्निमुखि ततः फेरुकोटिपरिवृते ।
विस्रस्तजटाभारे च भगवनि तथैव च ॥५७३॥

नग्नकालि ततः पश्चाद्रक्ष पाहि द्वयं द्वयम् ।
परमशिवपर्य्यङ्कनिवासिनि तथोच्चरेत् ॥५७४॥
कतृतीयचतुर्थौ च वह्निसंस्थौ कलान्वितौ ।
एवं च पञ्चवर्गाणां बीजानां दश चाहरेत् ॥५७५॥
विकरालमूर्त्तिकतामुपहृत्येति तत्परम् ।
दर्शय क्रोधहृदयं नग्नकालि ततः परम् ॥५७६॥
पाशाङ्कुशवाग्भवाश्च प्रेतबीजं तथापरम् ।
सर्गहीनं प्रेतबीजं त्रस्थं नादकलान्वितम् ॥५७७॥
आनन्दबीजं तदनु डूंकारं त्रिकुटा ततः ।
व्नैं रुधिरकालिकायै निपीतेति स्मरेत्ततः ॥५७८॥
बालनररुधिरायै त्वगस्थिचर्म्मा ततः परम् ।
वशिष्टायै महाश्मशानधावनप्रचलित ॥५७९॥
पिंगजटाभारायै च नारसिंहं ततः परम् ।
थ्रौं चौं फ्रौं ख्रौं ममाभीष्टसिद्धिं ततः ॥५८०॥
देहिद्वन्द्वं वितरयुगलं क्रोधमेव च ।
डाकिनि राकिनि चैव शाकिनि काकिनि तथा ॥५८१॥
लाकिनि हाकिनि चैव सद्यो धनानि चोद्धरेत् ।
नररुधिरं च ततः पिबद्वयं ततः स्मृतम् ॥५८२॥
महामांसं खाद खाद वाग्भवं तारमेव च ।
रमात्रपाकामक्रोधाः शाकिनी योगिनी ततः ॥५८३॥
कामिन्यस्त्रं द्विठश्चैव रुधिरकालि तत्परम् ।
कालीबोजं करङ्कधारिणि तदनन्तरम् ॥५८४॥
कङ्कालकालि तदनु प्रसीदयुगलं ततः ।
विद्यामावाहयामि तवाज्ञया ततः परम् ॥५८५॥

समागत्य मयि चिरं तिष्ठन्तु द्विठ एव च ।
कङ्कालकालि तदनु तारवाणीरमास्तथा ।।५८६।।
पाशकर्णत्रपाकामक्रोधशाकिन्य एव च ।
अतिचामुण्डा क्लीं चैव भगवति ततः परम् ।।५८७।।
भयङ्करकालि ततस्त्रैलोक्यदुर्निरीक्ष्य च ।
रूपे तदनु संभाष्य नवकोटि भैरवी च ।।५८८।।
ततश्चामुण्डाशतकोटिपरिवृते ततः परम् ।
तदनु मम द्विषतो हन मथ द्वयं द्वयम् ।।५८९।।
पच युग्मं विद्रावय युगं पातय चेत्यपि ।
निःशेषय युगं चोक्त्वा सानुबीजं ततः परम् ।।५९०।।
सर्वदीर्घयुतेनैव पूर्वसन्ध्यक्षरे हीनम् ।
बिन्दुसर्गविहीनं च ततश्च हृदयास्त्रके ।।५९१।।
भयङ्करकालि ततस्तारत्रपारमास्मराः ।
योगिनी कामिनी चैव शाकिनी भस्मली तथा ।।५९२।।
पाशहीनं भस्मबीजं षष्ठस्वरविभूषितम् ।
तदेव वाग्भवयुतं ततः पश्चाद्विनिर्द्दिशेत् ।।५९३।।
वह्निः पान्तं तथा वान्तं चतुर्दशस्वरैर्युतः ।
सबिन्दुं बीजमुच्चार्य्यं कर्णिका तदनन्तरम् ।।५९४।।
पपञ्चमं च रेफस्थं मेखलाबीजमेव च ।
मेखला च ततः पश्चाद्वह्निपत्नी ततः परम् ।।५९५।।
फेरुकालि तदन्ते च वाणीक्रोधौ ततः परम् ।
प्रचण्ड चा क्षिविततो विकटकालि ततः परम् ।।५९६।।
फां फीं फूं मुञ्जयुग्मं वलायुग्मं ततः परम् ।
त्रुटयुग्मं हृदयं च द्विठो विकटकालि ततः ।।५९७।।

जयक्रोधौ आये माये तायें प्रचण्डचण्ड वै ।
रक्षिणि भक्षिणि चैव दक्षिणि द्विठ एव च ॥५९८॥
करालकालि तदनु प्रणवः शाकिनी तथा ।
सर्वाभयप्रदे चैव सर्वसम्पत्प्रदे तथा ॥५९९॥
चटिनि वटिनि चैव कटिनि च स्फुरद्वयम् ।
प्रस्फुरयुगलं चैव ग्राँ ग्रीँ ग्रूँ चैव ग्रौँ ग्रः नमः स्वाहा ॥६००॥
तथा शाकिनो डाकिनी चैव तारं वाणी ततः ।
पाशाङ्कुशकालिकाश्च रमामायास्मरास्तथा ॥६०१॥
क्रोधं च योगिनी चैव कामिनी शाकिनी तथा ।
ध्व्रींकारं च त्रिशक्ति च क्षमा कुष्माण्डी तत्परम् ॥६०२॥
घोरघोरतरकालि ब्रह्माण्डबर्हिणि ततः ।
निर्गतमस्तके तवा[था]जटाविधूननेत्यपि ॥६०३॥
चकिततपोलोके ज्वालामालिनि तत्परम् ।
संमोहिनि संहारिणि सन्तारिणि ततः परम् ॥६०४॥
क्लाँ क्लोँ क्लूँ बलि चोक्त्वा गृह्ण खादय युगं युगम् ।
भक्षद्वयं ततः सिद्धि देहिद्वयं ततः परम् ॥६०५॥
मम शत्रूनिति स्मृत्य नाशययुगलं ततः ।
मथयुग्मं विद्रावययुगलं तदनन्तरम् ॥६०६॥
मारययुगं स्तम्भययुगं जम्भययुगलं ततः ।
स्फोटययुगं विध्वंसययुगलं परिकीर्त्तितम् ॥६०७॥
उच्चाटययुगं चापि हर तुरु युगं युगम् ।
दमयुग्मं मर्दयुग्मं भस्मीकुरु युगं तथा ॥६०८॥
सर्वभूतभयङ्करि सर्वशत्रुक्षयङ्करि ।
शाकिनी डाकिनी चैव प्रलयः फेत्कारी तथा ॥६०९॥

ततः सर्वजनसर्वेन्द्रियहारिणि तत्परम् ।
त्रिभुवनमारिणि च संसारतारिणि ततः ॥६१०॥
स्फ्रें स्फ्रौं ज्रौं क्ष्रौं चैव म्लैं क्लों व्लीं तथा ।
श्रीं प्रसीद भगवति नमः स्वाहा ततः परम् ॥६११॥
माया क्रोधश्च कामश्च योगिनी तदनन्तरम् ।
घोरघोरतरकालि ततो नु भुवनेश्वरी ॥६१२॥
शाकिनी चाङ्कुशं चैवामृतं योगिनी तथा ।
कामिनीक्रोधभूताश्च डाकिनी प्रलयस्तथा ॥६१३॥
फेत्कारी चामुण्डा चैव प्रेतबीजं ततः परम् ।
अस्त्रं शिरः कामकलाकालि ततः परं शृणु ॥६१४॥
डाकिनी सानुबीजं च तुङ्गश्चूडा ततः परम् ।
मणिमेखलाबलिजं चैव जलं च तदनन्तरम् ॥६१५॥
सभोगोऽस्त्रं कामकलाकालि तथापरं च रुट् ।
अस्त्रं च शाकिनी चैव कामकलाकालिका च ॥६१६॥
ङेऽन्ता नमः शिरः पश्चात्कामकलाकालि ततः ।
तारं वाणी योगिनी च शाकिनी स्मर एव च ॥६१७॥
कामिनीभूतरुषश्चैव क्रीं कामकलाकालि ततः ।
अङ्कुशं भूतबीजं च शाकिनी डाकिनी ततः ॥६१८॥
क्रोधं कामकलाकालि मन्मथः कालिका ततः ।
क्रोधाङ्कुशौ तथा भूतं कामकलाकालि ततः ॥६१९॥
भूताङ्कुशौ क्रोधबीजं काली स्मरः शिरस्तथा ।
ततः कामकलाकालि संबोधनपदं ततः ॥६२०॥
ततः सर्वशक्तिमयशरीरे तदनन्तरम् ।
ततः सर्वमन्त्रमयविग्रहे तदनन्तरम् ॥६२१॥

महासौम्यमहाघोररूपधारिणि तत्परम् ।
भगवति कामकलाकालि संबोधनपदम् ॥६२२॥
हरपत्नी हरिजाया मन्मथो वाग्भवस्तथा ।
पाशांकुशक्रोधाश्चैव योगिनी कामिनी ततः ॥६२३॥
शाकिनी डाकिनी चैव चामुण्डा तत एव हि ।
यक्षबीजं मेखला च पयःसानू ततः परम् ॥६२४॥
भासाख्यकूटं तदनु कूटं वाराहिकं ततः ।
अश्वमेधं ततः कूटं कूटं च शाम्भवं ततः ॥६२५॥
पाशुपतं ततः कूटं क्रोधत्रयं ततः परम् ।
अस्त्रद्वयं हृदयं च वह्निजाया ततः परम् ॥६२६॥
इति ते कथितो देवि प्राणायुताक्षरी मया ।

[कामकलाकाल्याः अयुताक्षरमन्त्रस्य फलश्रुतिः]

देव्याः कामकलाकाल्याः सर्वसिद्धिप्रदायिका ॥६२७॥
अस्याः स्मरणमात्रेण नासाध्यं भुवि विद्यते ।
रावणं हतवान् देवि संजप्य राघवः पुरा ॥६२८॥
हिरण्यकशिपुं दैत्यं जघान परमेश्वरः ।
एवं संजप्य देवेशि त्रिपुरं हतवान् हरः ॥६२९॥
कीर्त्तवीर्य्यार्जुनो नाम राजा बाहुसहस्रभृत् ।
त्रैलोक्यविजयी वीरो मनोरस्यप्रसादतः ॥६३०॥
मनोरस्य प्रसादेन कुवेरोऽभूद्धनाधिपः ।
मनोरस्य प्रसादेन अमरेशः शचीपतिः ॥६३१॥
मनोरस्य प्रभावश्च बहु किं कथ्यते त्वयि ।
कीर्त्त्यर्थी कीर्त्तिं लभते धनार्थी लभते धनम् ॥६३२॥
राज्यार्थी राज्यं लभते यशोऽर्थी लभते यशः ।
विद्यार्थी लभते विद्यां मुक्त्यर्थी मुक्तिमाप्नुयात् ॥६३३॥

पुत्रार्थी लभते पुत्रं दारार्थी दारमाप्नुयात् ।
षष्ठकालीं च संपूज्य संजप्य मनुमुत्तमम् ॥६३४॥
यद्यद्वाञ्छति यल्लोकस्तत्तदाप्नोति सत्वरम् ।
यथा चिन्तामणिर्देवि यथा कल्पद्रुमस्तरुः ॥६३५॥
यथा रत्नाकरः सिन्धुः सुरभिश्च यथा धेनुः ।
तथाशुफलदो देवि मन्त्रोऽयुताक्षरः सदा ॥६३६॥
देव्याः कामकलाकाल्याः सर्वं निगदितं तव ।
नित्यार्चनं जपं चैव स्तोत्रं कवचमेव च ॥६३७॥
सहस्रनामस्तोत्रं च तस्य गद्यमनुत्तमम् ।
पूजाकाले न्यासादिकं सर्वं निगदितं त्वयि ॥६३८॥
तव. स्नेहेन देवेशि सर्वमेतत्प्रकाशितम् ।
अतिगुह्यतमं देवि न प्रकाश्यं कदाचन ॥६३९॥
मा प्रकाशय देवेशि शपथे तिष्ठ सर्वदा ।
अधुना किं श्रवणेच्छा ते तन्मे कथय पार्वति ॥६४०॥

इति श्रीमदादिनाथविरचितायां महाकालसंहितायां श्रीकामकलाकाल्याः प्राणायुताक्षरीमन्त्रोद्धारोनाम पञ्चदशतमः पटलः ।

समाप्तश्चायं कामकलाकाल्याः सपर्य्यापर्य्यायः ।

शुभमस्तु ।

# परिशिष्टम् (१)

## आलोचनात्मिका टिप्पणी

### प्रथमः पटलः

१।१-५४।—अयमुपक्रमात्मकः पटलः। आरम्भे कामकलाकालीमधिकृत्य जिज्ञासा, एतस्या एतदीयमन्त्रस्य त्रैलोक्याकर्षणाभिधस्य वक्ष्यमाणस्य च माहात्म्यस्य गोपनीयतायाश्च प्रतिपादनव्याजेन तज्जिज्ञासाशान्तिः।

मन्त्रोऽयं भुक्तिमुक्त्योरविशेषेण साधकः। सहेलं सलीलमपि वास्य स्मरणं विद्याराज्यमोक्षलक्ष्मीः स्मरणकर्त्रे ददाति। विद् ज्ञाने विद् विचारणे, विद् सत्तायां, विद्लृ लाभे इत्यर्थचतुष्टयसम्पन्नाद् विद्धातोः विद्यापदं निष्पद्यते। अत एवैहिकस्य निःश्रेयसस्य पारत्रिकस्य चापवर्गस्य साधनं विद्या प्रथमत इहोपात्ता भुक्तिमुक्त्युभय-साधिका। राज्यपदमैहिकस्य सुखभोगस्य भौतिक्याः समृद्धेर्वा व्यञ्जकम्। मोक्ष स्तूत्कृष्टपुरुषार्थतया सर्वत्र शास्त्रेषु निर्दिष्ट इत्येकमिह साधनमपरे तु साध्येषु श्रेष्ठतमे तथाविधानां लक्ष्मीनां शुभप्रदानां लाभकरोऽयं मन्त्र इत्यस्योत्कर्षप्रतिपादनम् ग्रन्थकृतोऽभिप्रेतम्। विद्याराज्यमोक्षपदैः सह लक्ष्मीपदप्रयोगस्तेषां शुभप्रदत्वप्रसाद-योश्च व्यञ्जनाय।

शुभस्य शीघ्रमिति अभियुक्तोक्तिः। अत एवंविधस्य मन्त्रस्य ग्रहणार्थं देश-कालयोर्बन्धनं नास्ति किन्तु गुरोरपेक्षा वर्तते। गुरुणा विना न ज्ञानमिति तान्त्रिक-सिद्धान्तः। स चायं गुरुर्यथा सन्तुष्टः सन् मन्त्रं दीक्षयेत् तथानुतिष्ठेज्जिघृक्षुः साधक इति ग्रन्थकृदाज्ञा। अस्यामेव संहितायामभिहितम्।

न शास्त्रमालोक्य वदेन्नाचरेन्न जपेदपि।<br>
न पश्येन्नोपदिश्याच्च न कुर्यान्नैव साधयेत्॥<br>
गुरूपदेशतो लब्धे जपन्यासार्चनादिके।<br>
पश्चात् तत्साधयेत् सर्वं सदा तद्भावभावितः॥

[बीजोद्धाराख्यस्तृतीयः पटलः। श्लोक सं०—६-७।]

अत्र २७ तमे पद्ये चतुर्वर्गस्य चतुर्भद्रस्य च समुल्लेखो दृश्यते । तत्र धर्मार्थ-काममोक्षात्मकं पुरुषार्थचतुष्टयं चतुर्वर्गः । कीर्तिरायुर्यशोबलमिति धर्मज्ञानवैराग्यैश्व-र्याणीति, दानं ज्ञानं सौर्यं भोगो वेति चतुर्भद्रस्य विविधं स्वरूपं महाभारते दृश्यते ।

गुह्यकालिकामकलाकाल्योर्वास्तविकोऽभेदः । मन्त्रस्य ध्यानस्य प्रयोगस्यार्थात् पुरश्चरणस्य पूजायाश्च भेदेन व्यावहारिको भेद एतयोरिति प्रतिपादितमिह ।

पश्चात् सम्पूर्णस्य ग्रन्थस्य प्रतिपाद्यं समष्ट्येहाभिलपितम् । उपसंहारे तु आगामिपटले प्रतिपिपादयिषितस्य विषयस्य सूचना वर्तते । अयं च ग्रन्थकृतः स्वभावः अग्रिमाभिधेयं पटलस्योपसंहारे निर्दिशतीति ।

## द्वितीयः पटलः

२।१-५।—कामकलाकाल्यास्त्रैलोक्याकर्षणमन्त्रस्य स्वरूपम्—"क्लीं क्रीं हूं क्रों स्फ्रों कामकलाकालि स्फ्रों क्रों हूं क्रीं क्लीं स्वाहा" । अयमेव मन्त्रः मूलमन्त्रतया ग्रन्थकृताग्रे निर्देक्ष्यते । यथामति मन्त्रस्यास्य स्वरूपमुद्घाटितम् । सुधीभिः साधकैरिह स्वयमप्यूहेन परीक्षास्य कर्तव्या ततश्चेह प्रवर्तितव्यम् । तथा हि आद्यवर्गस्य कवर्गस्याद्यवर्णः क इत्यक्षरम् । अक्ष्णा वामेन ईकारेण परिशीलितः मूर्ध्नि मूर्धा अनुस्वारः य तृतीयो लकारः सचाधोयुक्तः सन् "क्लीं" इति बीजं भवति । अत एवेह चतुर्थचरणे युगधः इति पाठः समुचितः प्रतिभाति । बिन्दुरनुस्वारः, वामाक्षि-ईकारः, वह्निः-रेफः सर्वाद्यः कवर्गः मस्तके प्रधानतया निर्दिष्टे यस्य बीजस्यासौ "क्रीं" इति बीजं भवति । वामश्रुतिरूकारः सपरो हकारः वर्णमालायां तथैव पाठात्, अर्धचन्द्रोऽनु-स्वारस्तथा च "हूं" इति तृतीयं बीजं भवति । दक्षस्कन्धः ककारः ऊर्ध्वदन्त ओकार अधोऽर्थादधस्ताद् रोऽर्थाद् रेफेण युक्तः बिन्दुरनुस्वारो मस्तके यस्य स "क्रों" इति बीजम् । ओष्ठवर्गः पवर्गः उपूपध्मानीयानामोष्ठावित्यनुशासनेन तत्स्थानकत्वा-देतस्य, तस्य द्वितीयः फकारः स च हपूर्वेण सकारेण पूर्वयुक्तस्तथैव वर्णमालायां पाठात्, भूतबीजस्य तथादर्शनाच्च ओष्ठ ओकारो बिन्दुरनुस्वार इति "स्फ्रों" बीजं निष्पद्यते । देव्याः संबोधनं कामकलाकालि इति षडक्षराणि भवन्ति । भूतबीजाद्यं मारबीजान्तं च प्रतिलोमेन बीजानामूर्ध्वंनिर्दिष्टानां पञ्चानामभिधानम् । अनुलोमेना-भिधाने तु मारबीजाद्यं भूतबीजान्तं तस्य भवति निर्देशः । तथा च प्रथमतोऽनुलोमेन पश्चात् प्रतिलोमेन पञ्चानां बीजानां निर्देशं कृत्वा वैश्वानरवधू स्वाहा विद्यते प्रसिद्धा, तामन्ते योजयित्वा क्लीं क्रीं हूं क्रों स्फ्रों कामकलाकालि स्फ्रों क्रों हूं क्रीं क्लीं स्वाहा इति तन्मन्त्रस्वरूपं स्पष्टं भवति ।

२।६-११।—मन्त्रस्यास्य माहात्म्यकीर्तनम् ।

२।१२-१४।—अस्य मन्त्रस्य महाकाल ऋषिः, बृहती छन्दः, कामकलाकाली देवता, क्लीं बीजं, हूं शक्तिः, सर्वदा सर्वसिद्धये च विनियोगः कर्तव्यः । -

२।१५।—षडङ्गन्यासस्तु पञ्चभिर्बीजैरिह यथाक्रमं कर्तव्यः । एकश्च तन्नाम्ना करणीयः । सर्वत्र नाम्न एकैकमक्षरं निवेश्यम् । तथा हि—

क्लीं का हृदयाय नमः । क्रीं म शिरसे स्वाहा । हूं क शिखायै वषट् । क्रों ला नेत्रत्रयाय वौषट् । स्फ्रों का कवचाय हूं । ली कामकलाकाली सर्वाङ्गव्यापकाय फट् ।

२।१६-४३।—देव्याः ध्यानमभिहितमस्ति ।

२।४५-४९।—कामकलाकाल्याः । यन्त्रस्वरूपनिरूपणम् । अस्मिन् यन्त्रे भूपुरं कार्यं तत्र चतुर्षु द्वारेषु द्वे द्वे वज्रास्त्रे लेखनीये । यतो हि वसुवज्राढयं भूपुर-मिहापेक्षितम् । पुनर्भूपुरमध्येऽष्टदलं पद्ममारचनीयम् । तत्र केसराणि कर्णिकाश्च प्रकल्प्याः । कर्णिकामध्येऽधोमुखस्य त्रिकोणस्य त्रितयं लेखनीयम् । त्रिकोणानां बहिस्त्रि-कोणेषु बीजत्रयं ह्रीं हूं आं इति वामदक्षिणाधोभागक्रमेण लेखनीयम् । मध्यभागे तु क्लीं बीजं लेख्यम् । यन्त्रस्वरूपमग्रे प्रदर्शितमस्ति ।

२।५०-५३।—पूजायां प्रथमं भूतशुद्धिः मातृकान्यासः, पीठन्यासः, सामान्य-विशेषयोरर्घ्ययोः स्थापनं चतुर्णामङ्गदेवतानां गणेशसूर्यविष्णुशिवानां पूजा च कार्या । अनन्तरं मुख्याया कामकलाकाल्याः मानसी बाह्या च पूजोपचारैः पञ्चभिर्दशभिः षोडशभिर्वा यथाविभवं कर्तव्या ।

पाद्यमर्घ्यमाचमनीयं स्नानीयं चन्दनमिति पञ्चोपचाराः । पाद्यार्घ्याचमनीय-स्नानीयानि गन्धपुष्पधूपदीपनैवेद्यानि पुनराचमनीयं चेति संकलनया दशोपचाराः । आसनं मधुपर्कं वस्त्रं भूषणं नेत्राञ्जनं प्रदक्षिणनमस्कृतिश्चेति षट् दशोपचारेषु संयोज्य षोडशोपचाराः भवन्ति ।

एतदर्थं द्रष्टव्यः गुह्यकालीखण्डस्य षष्ठः पटलः—श्लोक संख्या १६९-१७६ ।

२।५४-५६।—देव्याः आवाहनमन्त्रः—

ओं ह्रीं क्लीं आं कामकलाकालि देवि आगच्छ आगच्छ तिष्ठ तिष्ठ पूजां गृहाण गृहाण स्वाहा ।

२।५७।—मूलमन्त्र इह समुल्लिखितः । तेनाष्टादशाक्षरस्त्रैलोक्याकर्षणो मन्त्रः पूर्वनिर्दिष्टो ग्राह्यः ।

२।५७-५६।—उपचाराणामर्पणाय सामान्यमन्त्रः—

यथा "एष पुष्पाञ्जलिः क्लीं कामकलाकाल्यै नमः" इति रीत्यानया वस्त्वन्तरमप्यर्पणीयम् ।

२।५६-६१।—अर्घ्यदानाय मन्त्रविशेषाभिधानम्—

ओं आं हूं ह्लींस्फ्रों श्मशानवासिन्यै कामकलाकाल्यै एषोऽर्घ्यो नमः । दक्षऽर्धेबोऽर्ध इति प्राङ्मन्त्रारम्भात् पठनीयस्तथापि ग्रन्थानुरोधादेवं लिखितः । एवमन्यत्राप्यूहनीयम् ।

२।६१।—षोडशोपचाराणां परिचयः प्रागेवेह प्रदर्शितस्ततोऽनुसन्धेयः ।

२।६३-६६।—अनङ्गगन्धपरिचयस्तन्माहात्म्याभिधानं च । अष्टादशवार्षिक्यास्ततो न्यूनवयस्काया युवत्या विवाहिताविवाहितसाधारण्या ऋतुमत्याः प्रथमदिनसंभवं रजः अनङ्गगन्धतयेह अभिमतम् ।

प्रथमत एव यस्या रजोदर्शनं तस्याः प्रथमदिनसंभवं रजः स्वयम्भूकुसुमतयेह विवक्षितम् । अत्रापि विवाहिताविवाहितसाधरण्या युवत्याः रजः अभिमतम् । किन्त्वत्र वयसः बन्धनं नास्ति । प्रथमरजो दर्शनमेकादशवर्षमारम्य पञ्चदशवर्षं यावत् भवति नार्या इति प्रसिद्धिः ।

२।६६-६६।—अनङ्गगन्धदानमन्त्रः—

ओं ऐं ह्रौं श्रीं हूं क्लीं ठः ह्लीं आं रतिप्रियायै कामकलाकाल्यै एष अनङ्गगन्धः नमः ।

२।६६-७२।—स्वयम्भूकुसुमपरिचयस्तस्या देवीप्रीतिकरतोपपादनम् ।

२।७३-७७।—स्वयम्भूकुसुमार्पणमन्त्र.—ओं ह्रीं क्लूं कामकलाकाल्यै हूं आं भगमालिन्यै ऐं स्त्रौं भगप्रियायै ठः श्रीं मदनातुरायै इदं स्वयम्भूकुसुमं नमः । धूपदीपनैवेद्याद्यर्पणावसरे मूलमन्त्रस्य व्यवहारो भवति ।

२।७८-८२।—पूजायां बल्यर्पणस्य मन्त्रः—

ओं क्लीं क्लीं क्लीं ह्रीं ह्रीं ह्रीं हूं हूं हूं ह्रां ह्रीं ह्रूं भगप्रिये भगमालिनि महाबलिं गृह्ण गृह्ण भक्षय भक्षय मम शत्रून् नाशय नाशय उच्चाटय उच्चाटय हन हन त्रुट त्रुट छिन्धि छिन्धि पच पच मथ मथ विध्वंसय विध्वंसय मारय मारय द्रावय द्रावय ह्रीं स्वाहा ।

२। ८३-८८।—भोजने बल्यर्पणमन्त्रः—

ओं ह्रीं ह्रीं हूं हूं क्षौं क्षौं स्फ्रों स्फ्रों आं आं फ्लीं फ्लीं कामकलाकालि महाकामातुरे महाकालप्रिये ममानिष्टं निवारय निवारय शत्रून् स्तम्भय स्तम्भय मारय मारय धम धम मर्दय मर्दय शोषय शोषय इमं बलिं गृहण गृहण खादय खादय हूं स्वाहा ।

## तृतीयः पटलः

इह तृतीयपटले कामकलाकाल्या आवरणपूजाविधिः सविशदमभिहितो विद्यते। सप्तावरणान्यत्र भवन्ति। आवरणसंख्यायां तद्विधाने च भेदस्तु देवताया आगमस्य सम्प्रदायस्य क्रमस्य च भेदतो भवति। देवताया वैविध्यं, शाक्तागमानां स्थूलतः षट्त्वं षडाम्नायत्वात्, सम्प्रदायस्य पञ्चत्वं कापालिकमौलेयदिगम्बरभाण्डिकेरमहाकालसंहितानुगामिभेदात्, क्रमस्य त्रित्वं सृष्टिस्थितिसंहारभेदादिति प्रसिद्धम्। सर्वमेतद् गुह्यकालीखण्डस्य दशमपटले विस्तरेण विवृतम्।

कामकलाकाल्या आवरणपूजा यन्त्रोपरि भवति। यन्त्रस्वरूपं द्वितीयपटले प्रदर्शितमस्ति। यत्राष्टदलमध्ये त्रिकोणत्रयं वर्तते। तत्र प्रथमावरणे बाह्यत्रिकोणस्य बहिः कोणेषु संहारिणी भीषणा मोहिनीति देवतात्रयस्य पूजा भवति। कोणमध्ये तु कुरुकुल्ला कपालिनी विप्रचित्ता पूज्यन्ते। तथा च षण्णां देवतानामिह प्रथमावरणे भवति पूजा। द्वितीयावरणे मध्यत्रिकोणस्य बहिरन्तश्च कोणेषु यथाक्रममुग्रा, उग्रप्रभा, दीप्ता, नीला, घना, बलाका च पूजनीयतां यान्ति। तृतीयावरणेऽन्तस्त्रिकोणस्य प्रत्येकं कोणे तिसृणां देवीनामेकत्र पूजेति नवदेवीनां भवति पूजा। तथा हि वामकोणे ब्राह्मी नारायणी माहेश्वरी, दक्षिणकोणे चामुण्डा कौमारी अपराजिता, अधः कोणे वाराही नारसिंहीन्द्राणी च पूजनीयाः। एतासां वारत्रयं कर्तव्या पूजेत्यपि वर्तते निर्देशः। चतुर्थावरणेऽष्टसु पद्मदलेषु वसुमितानां भैरवाणां पूजायाः विधानमस्ति। ते च असिताङ्गः, रुरुः, चण्डः, उन्मत्तः, क्रोधः, कापाली, भीषणः सम्मोहनश्चेत्यभिधानवन्तः। पञ्चमावरणे दलयोरन्तरेषु अष्टौ क्षेत्रपालाः पूज्यन्ते। तेषां नामानि यथा एकपादः, विरूपाक्षः, भीमः, सङ्कर्षणः, चण्डघण्टः, मेघनादः, वेगमाली, प्रकम्पनश्चेति। षष्ठावरणे पद्मदलानामग्रभागेषु अष्टौ योगिन्यः पूज्यन्ते। ताश्च उल्कामुखी कोटराक्षी, विद्युज्जिह्वा, करालिनी, वज्रोदरी, तापिनी, ज्वाला, जालन्धरी चेत्येतै-

नर्मभिरभिधीयन्ते । सप्तमावरणे दशसु दिक्षु लोकपालानां भवति पूजा । न चैषामिह नाम्नामुल्लेखो विद्यते । यथान्येषां पूज्यानां नामनिर्देशस्तथैषामप्युचितः स । अत्र इयं त्रुटिरिव प्रतिभाति ।

गुह्यकालीखण्डस्य द्वादशतमे पटले दिग्बन्धनमन्त्रा अभिहितास्तदुपक्रमे लिखितं—"संहितामतमीदृशम्" । संहितापदमिह महाकालसंहितामभिदत्ते । तस्मादिह कामकलाखण्डेऽपि लोकपालास्तत एवावगन्तव्यास्तत्र चादित्याः, पितरः दिङ्नागाः यक्षाश्च पूर्वदक्षिणपश्चिमोत्तराशाधिपाः, सिद्धाः यातुधानाः साध्या रुद्राश्चाग्नेयनैर्ऋत्यवायव्यैशानविदिशामधिपाः । ऊर्ध्वदिशः क्षेत्रपालाः अधोदिशश्च मातर अधिष्ठानं कुर्वन्ति । एत एव लोकपाला इति ध्येयम् [द्र० गु० ख० १२।८१०—१७ पद्यानि ] अनन्तरं त्रिकोणमध्ये भैरवयुता योगिनी चक्रमध्यगा मुख्यदेवता पूज्यते ।

३।२४-३३।—कामकाल्याः पुरश्चरणविधिः । पुरश्चरणे शुद्धिरपेक्ष्यते । भूमेरासनस्य पूजासम्भारस्यात्मनोऽर्थात् पूजकस्य तस्यैव कायवाक्चित्तानां च शुद्धिः कर्तव्यतया निर्दिष्टास्ति । तत्र भूमिद्रव्ययोः शुद्ध्यर्थं प्रागुक्ता गुह्यकालीपूजापद्धतिरीतिरिहानुमतंव्या । आत्मशुद्ध्यर्थं यमनियमयोः परिपालनं कर्तव्यम् । पश्चात् प्रातः कृतनित्यक्रियः कृतपूजाविधिः शुचिश्च साधकः भूमौ नरास्थि समन्त्रं निखनेत् । मन्त्रस्तु—ओं हूं ह्रीं आं क्लीं स्फ्रों सिद्धिं देहि देहि स्वाहा । तदुपरि आसनमास्तीर्य नृमुण्डमग्रतः कृत्वा नरास्थिजपमालया त्रैलोक्याकर्षण भिधस्य मन्त्रस्य लक्षमितं जपं कुर्यात् ।

जपानुष्ठानं तावत् दिवा शुचिपूर्वकं हविष्यान्नं भक्षयन् लक्षमितं कर्तव्यम् रात्रौ त्वशुचिपूर्वकं लक्षमितं तत् कर्तव्यम् । उभयोश्च दशांशस्य विंशतिसहस्रस्य होमः कर्तव्यः । होमदशांशस्य तर्पणम्, तद्दशांशाभिषेकः कर्तव्यः । एषु सर्वत्र पूजाविधिरनुसरणीयः । अत्रानुक्तः कर्तव्यविधिः गुह्यकालीपूजाविधिना सम्पादनीयः । तत्राप्यनुक्तश्चेद् विधिस्तर्हि दक्षिणकाल्याः विधिरनुसर्तव्यः । संक्षेपेण कामकलाकाल्याः पूजाया अयं विधिरित्यवगन्तव्यम् ।

३।३४-८१।—ऐहिकसिद्धिप्रदाः पञ्चदश प्रयोगा अत्र निर्दिष्टास्तेषां विधयस्तत्रैव द्रष्टव्याः, स्पष्टतया टिप्पण्यां नोल्लिखितास्ते । केवलमष्टमप्रयोगे तत्र सन्देहो विद्यते (३।५३-५४) श्मशाने योषितं बीजैः सहस्रश अभ्यर्च्य रक्तचन्दनरक्तपुष्पाभ्यां तामलङ्कृत्य सम्पूज्य च तस्या भगदर्शनं कर्तव्यम् । पश्चात् कालिकाध्यानं कर्तव्यम् । अत्र कैर्बीजैरेतस्या पूजा कर्तव्या अथ च द्विवारं पूजाविधानस्य कोऽभिप्राय इति जिज्ञासा सन्तिष्ठत एवेति ।

षष्ठप्रयोगस्य फलश्रुतौ चतुर्विंशतिसिद्धिपदमुपलभ्यते। तद्विवृतिस्तु अष्टौ प्रसिद्धाः सिद्धयोऽष्टावुपसिद्धयोऽष्टौ च प्राकृतिकसिद्धय इति संकलनया चतुर्विंशतिः सिद्धयो भवन्ति। तद् यथा अणिमा, महिमा, लघिमा गरिमा, ईशित्वं, वशित्वं, प्राकाम्यं, यत्र कामावसायित्वमिति योगशास्त्रप्रसिद्धाः सिद्धयः। अञ्जन-गुटिका-पादुका धातुवाद-खड्ग-वेताल-यक्षिणी-खेचरीणां सिद्धय उपसिद्धितया प्रसिद्धाः। प्राकृतिकसिद्धयस्तु स्तम्भनं मोहनं वशीकरणमुच्चाटनं मारणं विद्वेषणमाकर्षणं क्षोभणं चेति ज्ञेयम्।

## चतुर्थः पटलः।

चतुर्थपटलस्य प्रतिपाद्यः शिवाबलिविधिः। साङ्गोपाङ्गमिहास्य विवरणं ग्रन्थकृता प्रस्तुतम्।

४।१-५।—प्रयोगस्यास्य गोपनीयतमत्वाभिधानम्, पुरश्चरणानन्तरं च कर्तव्यमिति निर्देशः। कामकलाकाल्या अष्टौ प्रकाराः प्रागुपवर्णिताः सन्तीत्युल्लेखोऽत्र दृश्यते किन्तु गुह्यकालीखण्डेऽथवात्र पूर्वपटलेषु नास्माकमेतस्यास्ते प्रकारा दृष्टपथमायाता इति पंक्तेरस्याः सङ्गतिश्चिन्तनीयैव भवति। वक्ष्यमाणप्रयोगाभिधानेन कामकलाख्य-राजमध्यलघुपूर्वप्रयोगानभिप्रैति ग्रन्थकृत्। एतेनैव प्रयोगेण कामकलानाम्नः सार्थकत्वम्। गुह्यकाल्या सह कामकलाकाल्या अभेदप्रतिपादनं संहितायामुभयोरेव दृश्यते। अत्र उभयत्र देव्योः पूजाविधेः स्वरूपस्य च विवरणमस्तीति। साधकानां रुचिवैविध्यानुकूलपरिकल्पनासिद्धयै निराकारायाः पराशक्तेः रूपकल्पना। तथा च गुह्यकाली खण्डेऽभिहितम्

निर्गुणा सगुणा जाता निराकारापि साकृतिः।
अदेहापि सदेहाभूदरूपा रूपधारिणी॥ २।२६॥

तुलनीयम्—चिन्मयस्याद्वितीयस्य निष्कलस्याशरीरिणः।
उपासकानां कार्यार्थं ब्रह्मणो रूपकल्पना॥

अस्मिन् कामकलाखण्डेऽपि अग्रे वक्ष्यते दानवानां संहाराय देव्या विकराल-रूपता देवानां सम्मोहनाय च तस्याः सौम्यरूपता भवतीति।

४।६-१७।—कृष्णपक्षस्य चतुर्दश्यां तिथौ मध्यरात्रे समुत्थाय श्मशाने निर्जने वने वा सम्पादनीयोऽयं विधिः। साधकः दिने नित्यकृत्यं सम्पाद्य चतुर्विधामन्न

सामग्रीमुपकल्पयेत्—पायसमपूपं यावशं मोदकं च। विविधविध मत्स्यमष्टादशप्रकारं पशुमांसं च प्रस्तोतव्यम्। मांसमामं सिद्धं चेति प्रकारद्वयं देयम्। आममद्यतनमेव देयमपर्युषितम्। सिद्धमपि तत् कवोष्णं देयं न तूत्तप्तम् पृष्ठभागस्थमूलास्थ्नालेप च रहितं पवित्रं च देयम् न तु क्रव्यादादिभिर्हतमपवित्र दुर्गन्धयुतं चेति शास्त्रस्याज्ञा। मांसार्थमिह स्थलचराः जलचराः ग्राम्या आरण्याश्च पशवः परिगणिताः विद्यन्ते। नाना प्रकारकाणि व्यञ्जनानि भक्ष्यभोज्यलेह्यचोष्यादीनि च षड्रसोपेतानि उपकल्पनीयानि। पात्राणि च सौवर्णानि राजतानि ताम्राणि मार्त्तिकाणि पलासमधूकान्यतरपत्रपुटकरूपाणि च भवन्ति। परिवेषणं चैषां पृथक् पृथक् कर्तव्यम्। एकपात्रे बहुवस्तुनां परिवेषणे दोषमभिदधाति ग्रन्थकृत्।

४।१८-२३।—इहार्पणीयपक्षिमांसपरिगणनम्। पक्षिणश्चेह षट्त्रिंशद्विधाः गृह्यन्ते। पूर्वोक्तविधानमत्राप्यनुवर्तते।

४।२४-२६।—साधकः निर्भयचित्तः श्मशानस्थं शववस्त्रमेवासनतया परिगृह्य पद्मासनं बद्ध्वा उपविश्य कामकलाकाल्याः धूपदीपादिभिर्दशविधोपचारैः पूजां कुर्यात्। एतन्मन्त्रजपः तदीयस्तुतिपाठस्तस्या नमस्कारादिकं च निष्पाद्य शिवाबलिसम्पादनाय भूमौ शिरः दधानः कृताञ्जलिपुटश्च साधकः तस्या अनुज्ञां याचेत।

४।३०।—अनुज्ञायाचनमन्त्रः।

४।३१-३६।—इदानीमिह शिवानामावाहनम्। तन्मन्त्रस्वरूपं यथा—

ओं ऐं ह्रीं ह्रूं ह्रौं क्लीं स्फ्रों ब्लां ब्लीं ब्लूं ब्लैं ब्लौं श्रीं कामकलाकालि घोररावे महाकापालि विकट दंष्ट्रे सम्मोहिनि शोषिणि करालवदने भवनोन्मादिनि ज्वालामालिनि शिवारूपिणि भगवति आगच्छ आगच्छ मम सिद्धिं देहि देहि मां रक्ष रक्ष ह्रां ह्रीं ह्रूं ह्रौं क्षां क्षीं क्षूं क्षौं हूं हूं फट् फट् स्वाहा। अस्य मन्त्रस्य वारत्रयं सभक्ति शनैः पाठः कर्तव्यः।

४।४०-४५।—पश्चात् शिवागमनप्रतीक्षा कर्तव्या। यदि ता आगच्छन्ति तदा मनोरथस्य सिद्धिर्भवति। नायान्ति चेन्नेष्टसिद्धिरिति बोद्धव्यम्। आगतासु तासु दूरत एव प्रणतिपूर्वकं यथाशक्ति दशभिः षोडशभिर्वोपचारैः तासां पूजा कर्तव्या। पुनः सा चतुर्विधान्नसामग्री अन्यानि च भक्ष्याणि तासामग्रे समर्पणीयानि तत्रापि विहङ्गमानां मांसं पंक्तिशः स्थापनीयम्। अत्रार्पणस्य मन्त्रो यथा—

४।४६-५६।—ओं ह्रीं हूं कामकलाकाल्यै महाघोररावायै भगमालिन्यै शिवा-रूपिण्यै ज्वालामालिन्यै इमं बलिं प्रयच्छामि गृह्ण गृह्ण खाद खाद मम सिद्धिं कुरु कुरु मम शत्रून् नाशय नाशय मारय मारय स्तम्भय स्तम्भय उच्चाटय उच्चाटय हन हन विध्वंसय विध्वंसय मथ मथ विद्रावय विद्रावय पच पच छिन्धि छिन्धि शोषय शोषय त्रासय त्रासय त्रुट त्रुट मोहय मोहय उन्मूलय उन्मूलय भस्मीकुरु भस्मीकुरु जृम्भय जृम्भय स्फोटय स्फोटय मथ मथ विद्रावय विद्रावय हर हर विक्षोभय विक्षोभय तुरु तुरु दम दम मर्दय मर्दय पातय पातय सर्वभूतभयङ्करि सर्वजनमनोहारिणि सर्वशत्रु-क्षयङ्करि ज्वल ज्वल प्रज्वल प्रज्वल शिवारूपधरे कालि कापालि महाकापालि ह्रीं ह्रीं हूं हूं ह्रौं ह्रौं राज्य मे देहि देहि किलि किलि चामुण्डे यमघण्टे हिलि हिलि मम सर्वाभीष्टं साधय साधय संहारिणि सम्मोहिनि कुरुकुल्ले किरि किरि हूं हूं फट् स्वाहा । इति मन्त्रं वारत्रयं पठित्वा सर्वमन्नमांसादिकं पाणौ जलमादायोत्सृजेत् ।

४।६०-६५।—पूजायाः वस्तुपरिक्षेपणस्य च स्थानात् किञ्चिद् दूरे स्थित्वा कालीरूपेण तासां ध्यानं कर्तव्यम्—यथास्ता न बिभ्यति । निरीक्षणीयं च ताः सर्वं भक्ष्यं भक्षयन्ति भक्ष्यविशेषमेव वा भक्षयन्तीति । यदि सर्वं भक्षयन्ति तर्हि सर्वसिद्धि-र्भविष्यति । यदि भक्ष्यविशेषं भक्षयन्ति तर्हि सिद्धिविशेषस्य प्राप्तिरिति । कस्य भक्ष्यविशेषस्य भक्षणे कश्च लभ्यते सिद्धिविशेष इति मूलग्रन्थतोऽवसेयम् ।

४।६६-७२।—अष्टादशविधपशूनामाममांसार्पणफलमिहाभिहितम् ।

४।७३-८४।—षट्त्रिंशद्विधपक्षिणां मासस्यार्पणफलमिहाभिहितम् । विशेषस्तु ग्रन्थतोऽवधेयः । अर्पणावसरे कौयष्टिकमांसोल्लेखो विद्यते किन्तु फलश्रुतौ तस्य नास्ति चर्चेति त्रुटिः प्रतिभाति ।

४।८५-८६।—नरमांसार्पणफलं षष्टिसिद्धिलाभः । परमिह शूद्रस्याधिकारो न तु ब्राह्मणस्येति स्पष्टमुक्तमस्मिन् ग्रन्थे ।

४।८७-९३।—शिवा एताः कालीस्वरूपा एवेति मन्तव्यम् । अत एतासामवहेलना न कार्या । यद्येतास्तदवसरे नायान्ति तदा भविष्यतो विघ्नस्य भवति सूचना । यद्यागत्य न भक्षयन्ति तानि वस्तूनि, तदा साधकस्य मरणं संसूच्यते । निःशेषं भक्षयन्ति चेत् महदैश्वर्यलाभः । अर्धभक्षणे त्वर्धसिद्धिः संकल्पितस्येष्टस्येति सिद्धान्तः । शिवानां भक्षणानन्तरं भूतेभ्यः संहारभैरवाय क्षेत्रपालेभ्यः सर्वाभ्यश्च डाकिनीभ्यो गुरोरादेशा-नुसारं बलिर्दातव्यः । प्रत्यष्टम्यां प्रतिचतुर्दश्यां चायं क्रमः शिवाबलेरनुसरणीयः ।

सम्पादनीयश्चाष्टादशमासान् यावत् तदैव सिद्धिर्भवति न तु वारमेकमेव करणीयोऽयं विधिरिति शास्त्रस्य स्पष्टमुक्तिराज्ञा वा ।

४।९४-१०९।—अस्य शिवाबलेर्माहात्म्यं कीर्तितमिह ।

४।११०।—देवताबुद्धया एताः शिवाः दण्डप्रणामेन स्तवेन कवचेनान्यविधविधानेन च पूजनीयाः ।

४।१११-११८।—शिवास्तोत्रमभिहितम् ।

४।११९-१२२।—पश्चात् शिवाभुक्तशेषमन्नं तत्रैव भूमौ तथा निखनेत् यथा काकश्वानादयो वनवासिनः प्राणिन उत्खननं कृत्वा तन्न भक्षयेयुः । अन्यथा साधकस्य विघ्नो भवति । साधकोऽप्यर्पितेषु वस्तुषु गन्धमाल्यनैवेद्यादीनि प्रसादरूपेण गृह्णीयादिति शास्त्रस्याज्ञा । रात्रावेव कृत्यं समाप्य श्मशानाद् गृहमागन्तव्यम् ।

४।१२३-१३३।—त्रैलोक्याकर्षणमन्त्रस्य प्रासङ्गिकं माहात्म्यवर्णनम् ।

पञ्चमः पटलः ।

ब्रह्मस्वरूपा निर्गुणा निराकारा चिन्मयी पराशक्तिः कामकालिकप्रयोगादेव कामकलेत्यभिधानमवाप्नोदिति भूमिकामारचयन् ग्रन्थकृदिह राजपूर्वं मध्यपूर्वं लघुपूर्वं च कामकालिकप्रयोगं प्रथममध्यमाधमकोटिकं यथायथं विवृणोति—

षट्त्रिंशन्मितानां सकलसौन्दर्यगुणसंपन्नानां विभिन्नजातीयकानां युवतीनामिह पुनः राजपूर्वकामकालिकप्रयोगे निर्दिष्टपद्धत्या भवति पूजा ।

५।१-१४।—कामकालिकप्रयोगस्य माहात्म्यकीर्तनम् ।

५।१५-२४।—ग्राह्यरमणीनां निर्देशः ।

५।२५।—रमणीनां पुष्पवासिततैलेनाभ्यङ्गः प्रसाधनं च कर्तव्यतया निर्दिष्टम् । कर्पूरवासितजलैस्ताः समन्तं स्नापनीयाः ।

५।२६-२९।—तासां स्नापनमन्त्रस्याभिधानम्—

ओं ह्रीं क्लीं भगवति महामाये अनङ्गवेगसाहसिनि सर्वजनमनोहारिणि सर्ववशंकरि मोदय मोदय प्रमोदय प्रमोदय एह्येहि आगच्छ आगच्छ कामकलाकालि सान्निध्यं कुरु कुरु हूं हूं फट् फट् स्वाहा ।

५।३०-३२।—एतासां समन्त्रं वस्त्रार्पणमिहाभिहितम् ।

तत्र मन्त्रस्वरूपं यथा—ह्रीं ह्रीं क्लीं क्लीं स्त्रीं स्त्रीं त्रैलोक्याकर्षिणि वस्त्रं गृह्ण गृह्ण फट् स्वाहा ।

५।३४-३६।—एतासां कज्जलार्पणमन्त्रः—

ओं हूं महाघोरतरे फेत्काररराविणि महामांसप्रिये ह्रिलि ह्रिलि मिलि मिलि कज्जलं गृह्ण गृह्ण ठः ठः ।

५।३७-४१—एतासां सिन्दूरार्पणमन्त्रः—

ओं आ स्त्रीं क्लीं ह्रीं हूं श्रीं सर्वभूतपिशाचराक्षसान् ग्रस ग्रस मम जाड्यं छेदय छेदय छेदय स्फ्रों स्फ्रों स्फ्रों स्फ्रों ह्रौं ह्रौं मम शत्रून् दह दह उच्छादय उच्छादय स्तम्भय स्तम्भय विध्वंसय विध्वंसय सर्वग्रहेभ्यः शान्ति कुरु कुरु रक्षां कुरु कुरु ऐं ऐं ऐं फट् ठः ठः ।

५।४२-४६।—एतासामलक्तकार्पणमन्त्रः—

क्लीं क्लीं नवकोटियोगिनीपरिवृतायै हूं हूं कामकलाकाल्यै अनङ्गवेगमाला-कुलायै ह्रीं ह्रीं स्वयम्भूकुसुमप्रियायै इममलक्तं ह्रीं ह्रीं ह्रौं ह्रौं सुवासिन्यै निवेदयामि नमः स्वाहा ।

५।४७-५२।—पूजागृहे मण्डलारचनप्रकाराभिधानम् । मण्डलपदं वृत्ताकारस्य यन्त्रस्य च वाचकं भवति । प्रकृते वृत्ताकारमेव बोधयति तत्पदम् । अतएव विविध वर्णानामेकत्रिंशतिसंख्याकानां मण्डलानामष्टसु दिक्षु निर्माणस्येह निर्देशः । पूर्वस्याः दिशः श्वेतवर्णकं वह्निकोणस्यारुणवर्णकं दक्षिणस्याः दिशः कृष्णवर्णकं नैर्ऋत्यकोणस्य पीतवर्णकं पश्चिमायाः पाटलवर्णकं वायव्यकोणस्य हरितवर्णकमुत्तरस्या दिशः पिङ्गवर्णकमीशानकोणस्य धूमलवर्णकं मण्डलमारचनीयम् । सर्वत्र च द्वारपालैः साकं चत्वारि द्वाराणि देयानि । विदिशि द्वे दिशि च त्रीणि मण्डलानि कृत्वा मध्ये मण्डलमेकं करणीयम् । ऋषिपदं सप्तसंख्यामवबोधयति, सप्तर्षीणां प्रसिद्धत्वात् । त्रित्वसंख्यया तस्याः गुणने सति एकविंशतिसंख्यानां लाभः । एवं चन्द्रस्यैकत्वेन तद्वाचकं सोमपदमेकामेव संख्यां सङ्केतयति । अतोऽष्टसोमपदमङ्कस्य वामा गतिरिति रीत्याष्टादशसंख्यावाचकम् । एवं नवेन्दुपदमेकोनविंशतिसंख्यावाचकम् । यत्र मण्डले देव्या यन्त्रस्य पूर्वस्मिन् पटले विवृतस्यारचननिर्देशः । अस्मिन् यन्त्रे कामकला-काल्याः पूजाया निर्देशः । मण्डलेऽस्मिन् यन्त्रनिर्माणनिर्देशादेव मण्डलपदस्य

वृत्ताकारत्वमवधार्यते। अष्टादशसु मण्डलेषु षट्त्रिंशन्मितास्तरुण्यः युग्मकतयैवोपवेष्टुमर्हन्तीति तथैवोपवेशनीयास्ताः वामदक्षिणक्रममनुसृत्य गुरूणां गणेशादिदेवानां च पूजा विंशत्येकत्रिंशतितमयोर्मण्डलयोः करणीयेति अग्रे निर्देशस्तस्मात्सर्वमण्डलोपयोग इति ध्येयम्।

अत्र ५१ तमपद्यस्योत्तरार्द्धे "अष्टसोमसंख्यके" इति पाठः समुचितः प्रतिभाति पाठक्रमादर्थक्रमो बलीयान् इतिन्यायात्। मातृकानुसारमष्टसोमसंख्यकैरिति पाठस्तु ग्रन्थे धृत इति सुधीभिरालोचनीयम्।

५।५३-५४।—सुन्दरीणां मण्डलेषूपवेशनार्थं मन्त्रः—

हूं ह्रीं श्रीं क्लीं ऐं उपविश उपविश सुसन्निधिं कुरु कुरु स्वाहा।

५।५५-५६।—अत्र गजपदमष्टसंख्यावाचकम्। अष्टौ दिग्गजाः ऐरावताद्याः सन्ति प्रसिद्धाः। इन्द्रपदं च दशसंख्यां बोधयति, दशदिक्पालानामिन्द्रादीनां प्रसिद्धेः। यद्यपीन्द्राश्चतुर्दशाभूवन्निति पुराणप्रसिद्धिस्तथापीह तत्पदं दशसंख्यावाचकमुक्तयुक्तेः। अन्यथा गजेन्द्रतः [१४+८=२२] द्वाविंशतिसंख्याग्रहणे सति ततः परं त्रयोविंशतितमे मण्डले इष्टदेव्याः पूजाया आपत्तिः स्यात्। एकविंशतिरेव तु मण्डलानि निर्दिष्टानि सन्ति। अन्यथा ग्रन्थकृतः पूर्वापरसन्दर्भस्यापि सङ्गतिर्न स्यात्।

तथाहि पूर्वं—"नवेन्दुसंख्यके प्रिये विरच्य मूलमण्डलम्।
पुरोक्तयन्त्रमुत्तमं निवेश्य पूजनं चरेत्" ॥५।५२॥

इत्युक्तम्। पश्चाच्च—

"ऊनविंशे मण्डलेतु यजेद् देवीं प्रसन्नधी" ।५।६९॥

इत्यभिहितमस्ति ॥

मदुक्तरीत्या गजेन्द्रतोऽष्टादशसंख्याग्रहणे तूनविंशे मण्डले मुख्यदेव्या पूजोपपद्यते। पूर्वापरसन्दर्भाश्च संगच्छन्त इत्यवधेयम्। ऊनविंशतममण्डलमेवेह काममण्डलपदेन विवक्षितम्। विंशैकविंशतमयोर्मण्डलयोरुपयोगस्तु गुरुगणेशपूजयोरितिप्राङ् निर्दिष्टम्।

५।५७-६०।—मुख्यदेव्या आवाहनमन्त्रः—

ओं क्षौं क्षौं क्षौं क्षौं क्षौं एह्येहि परमतत्त्वरूपिणि भगवति कामकलाकालि स्फों स्फों स्फों स्फों स्फों सन्निधिं कुरु कुरु हूं हूं फट् फट् स्वाहा।

५।६१-६५ ।—कामकालिकप्रयोगार्थं देव्या अनुज्ञाप्रार्थना । तस्याः पद्यात्मकं स्वरूपमिह निर्दिष्टं तथैव पठनीयं च । ६१ तमे पद्ये चिन्मये इति पाठो दृश्यते परं "चिन्मयि" इति शुद्धः प्रतिभाति । चिच्छब्दात् मयट् प्रत्यये कृते सति टित्वात् टिड्ढाणयेति पाणिन्यनुशासनेन ङीपि सति चिन्मयीत्येव पदं शुद्धं भवति ।

५।६६-६६ ।—मण्डलोपविष्टसुन्दरीणां सोपचारं देवीबुद्धया पूजा कर्त्तव्ये-त्यस्येह निर्देशः । उपचारश्च षोडशविधः दशविधो वेति साधकस्य विभवानुसारं भवितु-मर्हति । यथैतास्तुष्टाः स्युस्तथाचरणीयम् । ऊर्नविंशे मण्डले पुरोक्तं यन्त्रं विलिख्य तदुपरि मुख्याया इष्टाया वा देव्याः पूजायाः विधानम् । प्रसन्नः सन् साधकोऽत्र पूजां नित्यपूजापद्धतिमनुसृत्य पूजासम्भारसञ्चयं च कृत्वा कुर्यात् ।

५।७०-७६।—षडङ्गन्यासं कृत्वा करणीयस्य पीठन्यासस्य विधिरभिहितोऽत्र । येन स्वदेहात्मके पीठे इष्टदेवताचिन्ता भवति । न्यासस्तन्मयताबुद्धिरिति तन्त्र-सिद्धान्तस्येहानुसरणम् । मानसी बाह्या चोभयप्रकारा पूजा कर्तव्या । तथैवेह ग्रन्थकृतो निर्देशः ।

५।७७-१५१—बाह्यपूजाविवरणम् । तदङ्गतयावश्यवक्तव्या अन्येऽपि प्रसङ्गादागता विषया इह विवेचिताः ।

५।७७-८०।—तत्र प्रथमं पूजोपकरणविन्यासः । मुद्राप्रदर्शनेन शङ्खस्थापन-विधेर्निर्देशः । कस्याः मुद्रायाः प्रदर्शनमिहेति जिज्ञासायां तच्छान्तये गुह्यकालीखण्डस्य दशमपटलीयः पूजाक्रमः दर्शनीयः । तत्र यथा भूमौ त्रिकोणं यन्त्रं विलिख्य मध्ये वृत्तं लेखनीयम् ओं अर्धपात्रासनाधाराय नमः इति मन्त्रेण तद् यन्त्रमभिमन्त्र्य ओं अर्घ पात्रासनाय नमः इति मन्त्रेण शङ्खस्याधारात्मिकां त्रिपादिकां सम्पूज्य तत्र जलेन अस्त्राय फडिति मन्त्रेण शंखं प्रक्षाल्य स्ववामे देव्याश्च दक्षिणे भागे तं शंखं स्थापयेत् । स्थापनार्थमिहाङ्कुशमुद्रा प्रदर्शनीया । अत्र च—

> क्षकारादीनकारान्तान् वर्णान् सर्वान् विलोमतः ।
> बिन्दुयुक्तान् पठन् शंखं पूरयेद् विमलोदकैः ।।
> [ गु० का० ख० १०।१७-१८ ]

इति रीत्या शंखे जलं निदध्यात् । तस्मात् मुद्रां प्रदर्शयेदित्यत्र मुद्रयाङ्कुशमुद्रा गृह्यते विधिनेत्यनेन गुह्यकालीखण्डेऽभिहितस्येहोक्तं निर्दिष्टस्य विधेर्ग्रहणम् । स्युरत्र-

मार्गेजेनप्रक्षेपस्य विधिरिह क्षकाराद्यकारान्तवर्णानां ग्रहणेनोपपद्यत इति नात्र संशीतिलेशोऽपि ।

अं वह्निमण्डलाय धूम्रादिदशकलात्मने नमः, उं सूर्यमण्डलाय तपिन्यादि द्वादशकलात्मने नमः, मं सोममण्डलाय अमृतादिषोडशकलात्मने नमः इति मन्त्रत्रयेण क्रमशः आधारं शंखं च पूजयित्वा शंखं वेष्टयेत् । तीर्थावाहनमन्त्रेण शंखस्थलजे तीर्थमावाहयेत् । तन्मन्त्रस्वरूपं तु—

ओं गङ्गे च यमुने चैव गोदावरि सरस्वति ।
नर्मदे सिन्धु कावेरि जलेऽस्मिन् सन्निधिं कुरु ॥

पश्चात् गन्धपुष्पाक्षतधूपदीपाद्यैर्दशोपचारैः शङ्खस्थजलं पूजयेत् । उपचारार्पणार्थमिह मूलमन्त्रस्योपयोगः कर्तव्यः विशेषमन्त्रानभिधानात ।

५।८१-८२।—शङ्खं पाणिनाच्छाद्य वाराष्टकं मूलमन्त्रं साधको जपेत् पश्चादङ्कुश मुद्रया चिन्मयं तीर्थं शङ्खस्थजले ध्यायेत् । अस्त्रायफडिति मन्त्रेण शङ्खस्थजलस्य रक्षा करणीया कवचाय हूमिति मन्त्रेण तस्यावगुण्ठनं धेनुमुद्रया कार्यं, पुनः तत्त्वमुद्रया तं शंखस्थजलं बोधयेत् ।

५।८३-८६।—आत्मनो दक्षिणभागे जलपरिपूरितं प्रोक्षणीपात्रं स्थापनीयम् । तस्मिन् प्रोक्षणीपात्रे शङ्खस्थमर्घ्यंजलं किञ्चिदुद्धृत्य देयम् । अर्घस्योत्तरभागे पाद्यमाचमनीयजलं च स्थाप्यम् । पश्चात् परमीकरणविधिना पवित्रितेन जलेन प्रतिमां पूजाद्रव्यमात्मानं ध्यातारमुपचारोपकरणादिकं च सिञ्चित्वा सर्वं पवित्रितं विदध्यात् । पवित्रतायै अवेक्षणं प्रोक्षणं वीक्षणं ताडनादि च पूजासामग्रीषु आत्मनि चापेक्ष्यन्ते । साधकस्य भक्तेः जागरूकतायाः परिचायकानि कर्माण्येतानि अपद्रव्यमुच्छिष्टादिकमपवित्रं वस्तु देव्यै मा समर्पितं भवतु इतीच्छयैव तथाविधाचरणस्येह निर्देशः । अर्घ्यपात्रे गन्धपुष्पयवाक्षतकुशाग्रतिलदूर्वासर्षपाश्च दातव्याः । पाद्य पात्रे श्यामाकं कूर्चं [?] कमलापराजितापुष्पे च देये । आचमनपात्रे जातीफलं लवङ्गं कक्कोलं च देयम् । एतेषां तत्र तत्र दानेन अर्घ्यपाद्याचमनीयानां प्राशस्त्यं भवति । विनैतैरपि सामान्यान्यर्घ्यादीनि भवितुमर्हन्तीत्यवधेयम् । मधुपर्कस्वरूपं परिदिशन्नाह—दधिमधुसर्पिषां सम्मिश्रणं मधुपर्कपदेन पूजायां व्यवह्रियते स चार्पणीयो भवति ।

५।६०-६५।—ऐहिकाभ्युदयसम्पादनाय अस्या देव्या इह बाह्यपूजाया विधानम्। इहागतं मण्डलपदं यन्त्रस्य वाचकम्। गोमयलिप्तभूमिपदं पवित्रस्थानं बोधयति। यतो हि भूमेः संस्कारः परिष्कारो वा गोमयेन सञ्जायते। यन्त्रं चाष्टदलपद्मात्मकमारचनीयम् तस्य च कर्णिकायामर्थात् मध्यभागे नव कोणा निर्मातव्याः कोणाग्रेषु बीजस्य पञ्चाशद्वर्णाख्यस्य लेखनमिह निर्दिष्टम्। अग्रे १०५ तमे पद्ये तथा संकेतोपलम्भात् पीठाधिष्ठातारः बृहदाकारः कूर्मः महामण्डूकः कालाग्निरुद्रश्च पूजनीया भवन्ति। ६४ तमे पद्ये साध्यपदेन कस्य ग्रहणमिति न ज्ञायते। क्रीं इति कालीबीजम्। कामकलाकाल्यास्तान्त्रिकगायत्र्या यन्त्रस्यास्य वेष्टनविधिर्विहितोऽस्ति। गायत्र्या अस्या स्वरूपमग्रे निर्दिष्टमस्ति।

५।६६।—कामकलाकाल्यास्त्रिपदा गायत्री निर्दिष्टा यस्याः जपेन राजसूययज्ञकरणफलं लभ्यत इति अभिहितमिह विद्यते।

५।६७-११६।—बाह्यपूजायाः क्रमो विधिश्चेह निर्दिष्टः। तथा हि यन्त्रस्य वामभागे गुरुपंक्ति—गुरुं परमगुरुं परमेष्ठिगुरुं परापरगुरुं च, दक्षिणभागे च गणेशादीन् गणार्काच्युतशूलिनः मध्ये चाधारशक्तिं साधकः पूजयेत्। वामदक्षिणभागविचारो यन्त्रमपेक्ष्य न तु साधक आत्मानमपेक्ष्य कुर्यात्। अस्यैव संहिताग्रन्थस्य गुह्यकालीपूजाक्रमं दशम पटले [गु० ख०] तथा दर्शनात्। अनन्तरं बृहदाकारः कूर्मः महामण्डूकः कालाग्निरुद्रश्च पीठाधिष्ठातारः पूजिताः भवेयुः। पश्चात् सागरचतुष्टयेन सहितायाः पृथिव्याः पूजा तत्र रत्नमयद्वीपस्य तत्र मणिमण्डपस्य तत्र कल्पतरोश्च कल्पनां विधाय पूजा कर्तव्यतयेह निर्दिष्टा। तदधस्तात् वेदिका कल्पनीया तत्र नादरूपिणी पीठशक्तिः धर्मज्ञानवैराग्यैश्वर्यैश्चतुर्भिः सह पूजनीयाः। धर्मादयश्चत्वारः वृषकेशरिभूतेभरूपाः रक्तश्यामहरिच्छुक्लवर्णाः नादरूपिणी पीठशक्तिश्च नीलवर्णा ज्ञेया ध्येया च। विदिक्षु अग्निवायव्यनैर्ऋतेशाननाम्ना प्रसिद्धासु धर्मादीनामथ च दिक्षु पूर्वदक्षिणपश्चिमोत्तरनाम्ना प्रसिद्धासु अधर्माज्ञानावैराग्यानैश्वर्याणां भवति पूजा।

यन्त्रात्मकस्य पद्मस्य कन्दं भवति आनन्दाख्यं, नालं भवति संविद्रूप, प्रकृतिस्त्रिगुणात्मिका पत्राणि भवन्ति अष्टसंख्याकानि, तस्या प्रकृतेश्च विकारः केसराणि भवन्ति, तन्मध्ये पञ्चाशद्वर्णयुक्ता कर्णिका भवति, या खलु पूज्यते साधकेन। सृष्टिप्रक्रियोपादानजातस्य पूजा उद्देश्यतयाभिहिता ग्रन्थकृता। यथा स्त्रीपुरुषयोः मैथुनेन सृष्टिरनुदिनं जगति दृश्यते तथास्य महत्त्वमवगत्य तान्त्रिकैरस्याः सृष्टेरादरं विधातुकामैः सृष्ट्युपादानजातं पूज्यते श्रीयन्त्रमपि सृष्टिनिदानप्रतीकं

मेवमिहापि तथा परिकल्पना । स्थूलस्य भावस्य महत्या: भावनाया वा सूक्ष्मतमाभिव्यक्तिः शाक्ततन्त्रेषु यन्त्रारचनपूजनादिना विधीयत इति स्पष्टमवलोक्यतेऽनुभूयते च । कर्णिकायां पुनरिह क्रमशः अउमबीजैरनुस्वारयुतैः सूर्यचन्द्राग्निदेवाः स्वकीयकलाभिर्युक्ताः पूज्यन्ते तत्पूजनमन्त्रस्तु प्रागिह निर्दिष्ट इति द्विरुक्तिभिया नोच्यते । सूर्यस्य द्वादश, चन्द्रस्य षोडश वह्नेश्च दश कलाः सन्ति प्रसिद्धाः ।

सत्त्वरजस्तमसां गुणानामथ चात्मन अन्तरात्मनः परमात्मनो ज्ञानात्मनश्च पूजा कार्या, पश्चात् पीठशक्तिपूजा कार्या । पीठस्य प्राणप्रतिष्ठादिकं तु गुह्यकालीखण्डे निर्दिष्टया रीत्या विधेयम् । तत्र ११।३६५-४१४। तथा १२।६१३-६४८। पद्येषु अभिहितौ स्तः मन्त्रविधीनि ततोऽनुसन्धेयौ । सिंहासनपूजाया इह निर्देशस्तद्रीतिरपि तत्रैव १०।८६४—८६६ पद्येषु द्रष्टव्या । पश्चादिह त्रैलोक्याकर्षणमन्त्रं जपन् साधक इष्टदेवीमात्मनि हृदि विचिन्तयन् पुष्पमेकं पाणौ निधाय करकच्छपिकया मुद्रया तस्याः ध्यानं कुर्यात् । ध्याने देवीयं शवासना शिवागणसंकुलश्मशानस्था शिवानादशोभिता सुरासुरमुनीन्द्रयोगिभिः सेविता समायाति । आसनार्थमुपकल्पिताः शवाश्च पञ्च सन्ति "ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः" इति वचनदर्शनात् । अनन्तरमस्या अञ्जलिमुद्रया आवाहनम् स्वागतादिकं च कार्यम् । पुनः क्रमशः आसनं पाद्यमर्घ्यमाचमनीयं स्नानीयं जलमुद्वर्तनम् चन्दनं सिन्दूरं कुङ्कुमं पुष्पमाल्यमन्यद्वार्पणीयं नैवेद्यादिकं समर्पणीयं तस्यै । पाद्यमर्घ्यं स्नानीयं जलं च स्वाहान्तेन मन्त्रेण, वस्त्रमाभरणादिकं च नमोऽन्तेन मन्त्रेण, आचमनं स्वधान्तेन मन्त्रेण, सर्वमन्यत्पुनः स्वाहान्तेन मन्त्रेण तस्यै समर्पणीयमिति विशेषनिर्देशः ।

पुनरिह तदीयपरिवारस्य पूजा कार्या । परिवारपदमिह परिचारकपरम् । तेन नाङ्गदेवताग्रहणम्, तासां कुटुम्बतयैव प्रसिद्धेः । धूपदीपनैवेद्यादीनि पश्चादर्पणीयानीति ।

५।१२०-१२६।—नैवेद्यविवरणम् । तत्र ब्राह्मणादेर्वर्णस्य नैवेद्याद्यर्पणेऽधिकारविशेषाभिधानम् । यथा सात्त्विकमेव द्रव्यं ब्राह्मणेनार्पणीयम् । आमिषं मदिरादिकं तत्रापि पैष्टिकीं विहाय क्षत्रियेणार्पणीयम् । सुराया अनुकल्पविशेषः—कांस्यपात्रे नारिकेलोदकं, ताम्रपात्रे गोः दुग्धं दधि घृतं मधु च क्षत्रियवैश्यावर्पयितुमर्हतो न ब्राह्मणः । शूद्रस्तु पैष्टिकीमपि मदिरां सर्वमन्यच्चार्पयितुमर्हति देव्यै इति ।

५।१२७-१३१।—केषां पशूनां मांसं द्विजोऽर्पयितुमर्हतीति परिगणितमिह । तदतिरिक्तपशुमांसार्पणेऽनधिकारोऽपि द्विजस्येह निर्णीतः । सिंहव्याघ्रनराणां मांसार्पणे

केवलं क्षत्रियस्य विद्यतेऽधिकारः। कृष्णसारमृगमांसार्पणे चैतस्यानधिकारः। एवं मूषमार्जारचापमांसार्पणेऽनधिकारः शूद्रस्येत्यवधेयम्।

५।१३२-१३३।—वैधपशुमारणविधिविवरणम् प्रदर्शितमिह।

५।१३३-१३५।—निषिद्धबलीनामिह निर्देशः। अत्र वर्णमाधारतया परिगृह्य निर्णयो दत्तः। स्वगात्ररुधिरं बलिरूपेणार्पयितुमधिकारः क्षत्रियस्यैव नान्यवर्णस्य। सात्त्विकवृत्तिसम्पन्ना कस्यापि वर्णस्य व्यक्तिः जीवहत्यां न कुर्यात्, किन्तु वक्ष्यमाणमनुकल्पं तत्स्थानीयं समर्पयेत्। पक्षिणस्त्रिपक्षतो न्यूनस्य महिषादेस्त्रिवर्षतो न्यूनस्यान्यस्य पशोस्त्रिमासतो न्यूनस्य वृद्धस्य विकृताङ्गस्य खञ्जान्धादेः बलौ न भवत्युपयोग इति विशेषनिर्देशोऽत्र विद्यते।

५।१३६-१३७।—अर्पणीयपश्वनुकल्पस्येह निर्देशः। अस्योपयोगं सात्त्विकः साधकः कर्तुमर्हतीति पूर्वमभिहितम्।

५।१३८।—ताम्बूलविन्यासविवरणमभिहितमिह।

५।१३९।—ताम्बूलार्पणमन्त्रात्मकोऽयं श्लोकः। अत आदौ प्रणवयोजना मन्त्रेऽस्मिन् कर्तव्या।

५।१४०-१४१।—मन्त्रजपविधानमभिहितम्। जपश्च मूलमन्त्रस्य भवेत् न तु-शक्तिगायत्र्याः, विशेषनिर्देशाभावात्। ततः पूर्वं पूजायां समागतानां शक्तीनां यथा सन्तोषो भवेत्तथाचर्य ताः विसर्जनीयाः।

५।१४१-१४४।—ब्राह्मणस्य कृते शक्तीनामाकर्षणं निषिद्धम्। अत्र द्विजपदं ब्राह्मणपरमत एव क्षत्रियवैश्यशूद्राणामिहाधिकारः कण्ठतोऽस्ति निर्दिष्टः।

५।१४५-१४७।—आकर्षणार्थमनुपयुक्तानां स्त्रीणां विवरणमिह प्रदत्तम् ग्रन्थकृता।

५।१४७-१५१।—आकर्षणोपयोगिन्यास्तरुण्याः लक्षणमभिहितमत्र। कामविकारस्यावश्यं संभावितस्य वर्जनम्। यथाशक्ति यथारुचि यथासंख्यं जपं देव्यै समर्प्य समन्त्रं पुष्पाञ्जलित्रयं दत्वा प्रदक्षिणं कुर्यात्। पुनः स्तोत्रस्य सहस्रनाम्नः कवचस्य च पाठं कुर्यात्। पुनः प्राणायामषडङ्गे विधायात्मानं देवतारूपं ध्यायन् देव्याः विसर्जनं कुर्यादिति। पुष्पाञ्जलित्रयदानमन्त्रः कः भवतीति जिज्ञासा न शाम्यति। अत्रानिर्देशादन्यत्र गुह्यकालीखण्डे योनिमुद्रया मूलमन्त्रेण पुष्पाञ्जलित्रयदानमभिहितं तदनुसर्तव्यं नवेति सुधीभिर्विचार्यम्।

षष्ठः पटलः ।

६।१-३।—त्रिविधेषु कामकालिकप्रयोगेषु प्रथमोऽर्थादुत्तमस्तस्य प्रकारः पञ्चमे पटले सविस्तरमवगमितः ग्रन्थकृताधुनावशिष्टयोस्तयोर्मध्यलघुपूर्वयोर्मध्यमाधमकोटिकयोः सक्षेपेण परिचयः प्रस्तूयते । सैव रीतिस्त एव मन्त्रा इहानुसरणीयाः, केवलं शक्तीनां संख्यैकत्र चतुर्विंशतिरपरत्र द्वादशावगन्तव्या इति भेदः विशेषो वा । क्षत्रियस्यैषु प्रयोगेष्वधिकारः न तु ब्राह्मणस्य वैश्यस्य वेति बोध्यम् । अत एव राज्ञः कण्ठतोऽभिधानं द्विजस्य च निषेधः । द्विजपदमिह प्रसङ्गतः ब्राह्मणवैश्ययोरेव वाचकम् । राज्ञः पृथगभिधानात् । तदपि विपरीतकर्मणीति ग्रन्थस्वारस्येन स्वार्थकरणस्य सङ्गतिरवगन्तव्या ।

६।४-८।—कामकालिकप्रयोगस्य स्थानमधिकारिणां कर्तव्यजातं चेह निर्दिष्टम् । तद्यथा पुरश्चरणकरणे कुशलः जपशीलः यमनियमसंपन्नश्च साधकः निर्जनस्थाने पर्वते नद्यास्तटे शून्यागारे शिवालये सिद्धपीठे देव्याः वा पीठे चतुःपथेऽपि प्रयोगममुं कुर्यात् । श्मशानादिस्थानस्येहानिर्देशात् न तत्रायं कर्तव्यः प्रयोगः । शक्तीनां तत्र निर्भीकताया असंभवात् । विधिपूर्वकमेव कर्तव्यम् कर्मकर्तृसाधनानामन्यतमस्यापि वैगुण्ये न केवलं वैफल्यमपि तु देव्या रुष्टतायामनिष्टस्यापत्तिरपि संभवति । अतः कर्मण्यस्मिन् प्रवृत्तः साधकः त्रिकालस्नानमाचरेत् हविष्यमेव भक्षयेत् दुष्टप्रवादं, परस्यात्मीयस्य वा निन्दां, स्त्रीशूद्राभ्यामालापं दुर्जनस्य संसर्गं च वर्जयेदिति शास्त्रस्याज्ञा ।

६।९।—आसनप्रकारा अभिहिताः । तेषु प्राशस्त्यमपि निर्दिष्टम् ।

६।१०।—जपमालाप्रकारोऽत्राभिहितः तेषु प्राशस्त्यनिर्णयोऽपि कृतः ।

६।११।—मूलमन्त्रस्य लक्षसंख्याको जपो विहितस्तथा सति सामान्यविशेषयोस्तद्वतयोः प्रयोगयोरधिकारो भवति ।

जपसंख्यामवधीकृत्य तदीयदशांशं होमं तदीयदशांशं तर्पणं तदीयदशांशमभिषेकं च कृत्वा साधकः सिद्धमन्त्रो भवति । अनन्तरमेव प्रयोगेष्वधिकारमसौ लभत इत्याशयः ।

६।१२-१३।—सामान्यप्रयोगान्तर्गताकर्षणप्रयोगोऽभिहितः ।

६।१४-१५।—उच्चाटनप्रयोगोऽत्र निर्दिष्टः ।

६।१६-१७।—सर्वज्ञतासिद्धिप्रयोगोऽभिहितोऽत्र ।

६।१८।—शत्रुर्व्याधियुतो भवति प्रयोगेणानेन ।

६।१६—२१।—मारणप्रयोगोऽयम् । अत्र साध्यपदेन यस्य मारणमभिप्रेतं तस्य ग्रहणम् ।

६।२२-३०।—रक्षायन्त्रविवरणम् । अग्रे यन्त्रस्य स्वरूपं प्रदर्शितमिह । भूर्जपत्रे षट्कोणयुतमष्टदलकमलस्य निर्माणं कर्तव्यम् । योनिस्त्रिकोणस्येह वाचकम् । त्रिकोणद्वयं च षट्कोणबोधकम् । लाक्षागोरोचनकर्पूरकेसरकस्तूरीभिरस्य यन्त्रस्यालेखविधानम् भाषायां लाखनाम्ना प्रसिद्धस्य बोधकं लाक्षापदं, गोरोचनं प्रसिद्धम्, चन्द्रपदं कर्पूरवाचकम् काश्मीरभवं केशरं मृगनाभिजा कस्तूरीति कोषानुशासनतोऽवगम्यते । षट्कोणमध्ये देव्याः कामकलाकाल्यास्त्रैलोक्याकर्षणमन्त्रः लेखनीयः । अष्टदलेषु क्रमशः ग्लूं क्रौं क्षूं क्षौं स्हौः ह्रौं फ्रों क्रीं बीजानि देयानि । दलयोरन्तरेष्वष्टसु ओं ऐं ह्रीं स्त्रीं श्रीं क्ली क्लूं क्लौं बीजानि देयानि । आं क्रों हूं स्फ्रों चत्वार्येतानि बीजानि सर्वत्र द्वारेषु लेख्यानि । सानुस्वरैः अकारादिक्षकारान्तैः वर्णैः वेष्टनं कार्यम् । वज्रास्त्रस्य युगलं च चतुर्द्वारेषु देयं तद्यन्त्रं प्रथमं रक्तवस्त्रेण पुनस्तन्तुभिर्जतुभिर्वा वेष्टयेत्, पुनः पट्टवस्त्रेणावृतं विधाय सुवर्णरजतताम्रादिधातुषु यथाविभवं निधाय बध्नीयात् पुरुषः दक्षिणबाहौ कण्ठे वा महिला तु वामबाहौ कण्ठे वेति । यं मनोरथमादाय धारयेत् सोऽवश्यं पूर्ति यास्यतीति परीक्षितम् । अत एवेह ग्रन्थे यन्त्रराजेत्यस्याभिधानम् ।

६।३१-४४।—रक्षायन्त्रस्य माहात्म्यं फलश्रुतिश्चेह वर्णिता । न कश्चिदस्ति विशेषः व्याख्येयो वा ।

६।४५-४८।—अस्यैव रक्षात्मकस्य यन्त्रराजस्य प्रकारान्तरेणापि कौलिकः प्रयोगं करोति यस्येह निर्देशः ।

६।४६-५४।—रक्षायन्त्रस्य प्रकारान्तराभिहितप्रयोगस्य फलश्रुतिः । नास्ति कश्चन व्याख्येयो विषयः ।

६।५५-५६।—आकर्षणप्रयोगः । तथा हि मुक्तवासाः दिगम्बरः साधकः यस्य यस्या वाकर्षणमिच्छति तस्य तस्या वा साध्यपदेन संकेतितस्य संकेतितायां वा नाम ताम्बूलपत्रे मधुना लिखेत् तच्च नाम त्रैलोक्याकर्षणमन्त्रेण संवेष्टयेत् पुनरिहाभिधीयमानमन्त्रेणाभिमन्त्र्य तत्ताम्बूलपत्रं तस्य तस्या वा भक्षयेत् । मन्त्रश्च—ओं ह्रीं क्लीं

अमुकम् अमुकीं वा क्लेदय क्लेदय आकर्षय आकर्षय मथ मथ पच पच द्रावय द्रावय आनय आनय मम सन्निधिं हूं हूं ऐं ऐं श्रीं श्रीं स्वाहा ।

६।६०-६४।—अस्याकर्षणप्रयोगस्य फलश्रुतिः माहात्म्यं च वर्णितम् ।

६।६५-६७।—अपर आकर्षणप्रयोगः ।

ओं क्लूं क्लीं ह्रीं हूं क्रों श्रीं आं ऐं क्रीं कामकलाकालि सर्वाकर्षिणि अमुकम् अमुकीं वा [यस्य यस्या वा आकर्षणमभिप्रेतं तन्नाम द्वितीयान्तं विधाय] आकर्षय स्वाहा इति मन्त्रेण जलपात्रस्थजलमभिमन्त्र्य वामहस्तेन साधकः पिबेत् प्रक्षालयेच्चात्मनो मुखम् । यं यां वा प्रयोक्ता साधक इच्छति तस्य तस्या वा का कथा यो या वा तं पश्येत् स सा वा सर्वाप्याकृष्टा भवेदितीह कथितम् । वशीकरणमपि प्रयोगममुं वक्तुं शक्यम् । यतो हि आकृष्टा व्यक्तिः सदा साधकस्य वशे तिष्ठेदिति शास्त्रस्येहोपदेशः ।

६।६८-६९।—अभिहितप्रयोगस्य प्रभावाभिधानम् ।

६।७०-७६।—पादुकासिद्धिविधिः । तथा हि पलाशकाष्ठस्य पादुके संगृह्य तत्र श्मशानाङ्गारेण—ओं ऐं क्रीं श्रीं ह्रीं हूं कामकलाकालि गन्तव्यभूमिमर्यादमुकं स्थानं खण्डय खण्डय छेदय छेदय त्रुट त्रुट छिन्धि छिन्धि स्फ्रों आं क्रों सिद्धिं देहि दापय फट् फट् फट् स्वाहा इति मन्त्रं लिखेदध चात्मनः पादयोः स्नुहीदुग्धं लेपयेत् । एतयोः सिद्धपादुकयोरारूढः साधकः इच्छागामी भवति अर्थात् यं देशं गन्तुमिच्छेत् तत्र गन्तुं प्रभवेत् । पूर्वस्यां दिशि चतुःशतक्रोशपरिमितं दक्षिणस्यां दिशि षट्शतक्रोश परिमितं पश्चिमायामष्टशतक्रोशपरिमितम् उत्तरस्यां दिशि सहस्रक्रोशपरिमितं विदिक्षु वह्नीशानवायव्यनैर्ऋतासु शतक्रोशपरिमितं दूरमलक्षितः सन् आत्मानं प्रच्छन्नं कृत्वा साधकः गन्तुमर्हति । ततो दूरदेशेभ्यः परावर्तितुमपि शक्नोतीति पादुकासिद्धिमाहात्म्यमभिहितमत्र ।

६।७७-८१।—खेचरीसिद्धिविधिः । साधकः चन्द्रग्रहणावसरे स्वर्णक्षीरीलताविशेषस्तस्या मूलमुत्पाट्य रजस्वलाया नार्या भगे दिनत्रयं यावदर्थाद् यावत् सा ऋतुमती तिष्ठति तावत् स्थापयित्वा धूपदीपनैवेद्यादिभिस्तत् स्वर्णक्षीरीलतामूलं पूजयेत् । पुनः सूर्यग्रहणस्य प्रतीक्षा कार्या तदवसरे खञ्जरीटस्य प्रसिद्धपक्षिविशेषस्य रुधिरेण

संयोज्य चूर्णयेत् ततश्च यवत्रितयमिता गुटिका निर्मातव्या। भाद्रपदमासस्य कृष्णपक्षे चतुर्दश्यां तिथौ कुक्कुटस्य बलिमस्मै दत्वा शिखामूले धारयेत्। धारणं चात्र समन्त्रं कार्यम्। तन्मन्त्रस्तु अनुपदमेवोच्यते—

६।८२-८८।—ओं ऐं ह्रीं क्लीं आं क्रों हूं स्फ्रों श्रीं कामकलाकालि रतिमोहिनि वसामांसरक्तप्रिये खेचरं मां कुरु कुरु रक्षोभूतपिशाचसिद्धविद्याधरोरगान् मम वशं कुरु कुरु ह्लां ह्लीं क्षां क्षूं क्रां क्रीं क्लां क्लूं खेचरीसिद्धिदायिनि त्वर त्वर कह कह कालि कापालि हूं हूं हूं फट् फट् फट् स्वाहा।

अत्र बलिदानस्य चूर्णकरणस्य पूजायाश्च विधिर्मन्त्रश्च नाभिहितो इति गुरुपरम्परात. तावदगन्तव्यौ।

६।८८-९३।—खेचरीसिद्धिफलश्रुतिः।

६।९४-११५।—खड्गसिद्धिविधिः।

६।९४-१००।—तथा हि षोडशपलमितं काम्बोजदेशस्य लौहं मकरसंक्रान्तौ अर्थान्माघमासे संग्राह्यम्। कर्कसंक्रान्ति यावदर्थात् तस्य श्रावणमासं यावत् पूजा कर्तव्या। पुन आश्विनकृष्णाष्टम्यां व्योकारमर्थाल्लौहकारं स्वकीये गृहे समाहूय असिं निर्मापयेत् साधकः न तु तदीयगृहं लौहमादाय गच्छेत्। मुक्तचिकुरो दिगम्बरः शुचिश्च लोहकार· प्रतिदिनं किमप्याचरन् असिनिर्माणे मकरसंक्रान्तिं यावत् संलग्नस्तिष्ठेत्। ततो माघकृष्णचतुर्दश्यां नरकनिवारणचतुर्दश्यां खड्गस्य पूजां कृत्वा देव्याः कालिकाया अग्रे स्थापयेत्। पूजाविधिश्चेह गुरुणावगन्तव्यः। इह तस्य नास्ति निर्देशः। धूप दीपनैवेद्यादिना पूजाविधाननिर्देशः दशोपचारं संकेतयति न तु तद्रीतिम्। खड्गस्य मुष्टौ च स्नुहीवटार्काणां दुग्धं लेपयेत्। इमं च खड्गं देव्यै समन्त्रं समर्प्य गृह्णीयात्। अनुपदमेवोच्यते मन्त्रोऽयम् खड्गग्रहणस्य।

६।१०१-१०६।—ओं ऐं हूं क्लौं क्लौं श्रीं घोरनादे दंष्ट्राविकटे मुखमण्डले [दंष्ट्राविकटमुखमण्डले ?] महाघोरे घोरतरे महाभयङ्करे श्मशानवासिनि योगिनी-डाकिनीपरिवृते कल्पान्तकालानलविकराले दुर्निरीक्ष्यरूपे गर्ज गर्ज विध्वंसय विध्वंसय छिन्धि छिन्धि दम दम मर्दय मर्दय पातय पातय उच्छादय उच्छादय क्षोभय क्षोभय मारय मारय द्रावय द्रावय इमं खड्गं देहि मे स्वाहा।

अत्र १०२ पद्यस्य तृतीयचरणे मुखमण्डल इति पाठः समुचितः प्रतिभाति प्रसंगार्थस्वारस्यात् । मातृकानुरोधात् प्रकृतपाठादरः ।

६।१०७।—नृपसाधकस्यात्राधिकारस्तदुपयोगित्वात् खड्गस्य । अत एव स स्वगात्ररुधिरं खड्गाय बलिरूपेण दातुमर्हतीति तद्विधानम् । पश्चादस्मै नरबलिस्तदभावे महिषाबलिश्च दातव्यः ।

६।१०८।—देव्या खड्गादानार्थमनुज्ञाग्रहणमन्त्रोऽयम् ।

६।१०९।—खड्गं हस्ते धृत्वा तत्र अंकोलीतैलं लेपयेत् । अंकोलीतैल मस्माकमपरिचितम् सुधीभिः पाठकैराकलनीयम् तत् । अस्य पद्यस्याक्षरार्थस्तु विचारणीयः सुधीभिः साधकैः ।

६।११०-११४।—खड्गमुष्टौ त्सरुनिवेशनमन्त्रः ।

६।११५।—त्सरुं मुष्टौ निवेश्य खड्गमनावृतमपि रक्षितुं शक्यत इति निर्देशः ।

६।११६-१२७।—खड्गसिद्धिफलश्रुतिः प्रभाववर्णनं च । तदङ्गतया पौराणिककथास्पर्शोऽप्यत्राकलनीयः ।

६।१२८-१३४।—अञ्जनसिद्धिविध्यभिधानम् ।

तथा हि दशदिनात्मकावधौ जातः बालो यदि मङ्गलवासरे म्रियते तदा तस्य खर्परात्मकाधारे भक्षितनवनीतस्य कृष्णमार्जारस्य वान्तं स्नेहस्थानीयमादाय खञ्जरीटपक्षमिश्रितमर्कतूलं (भाषायां रुई प्रसिद्धं) वर्त्तिकास्थाने च कृत्वा श्मशाने कज्जलमारचयेत् कज्जलारचनदिनं तु शनैश्चरं भवति । प्रातः रविवासरे तद् देव्यै समर्प्य नेत्रे स्वयं साधकः समन्त्रमञ्जयेत् । तदञ्जनमन्त्रो यथा—ऐं श्रीं ह्रूं स्क्रों सर्वसिद्धिदायिनि मा मां पश्यन्तु सर्वभूतानि स्वाहा इति ।

शनिवारे कज्जलारचनं ग्रन्थस्वारस्यादिह टिप्पणेऽभिहितमक्षरार्थस्तु सुधीभिः विचारणीयः ।

६।१३५-१३८।—अञ्जनसिद्धिफलश्रुतिः ।

६।१३९-१७०।—गुटिकासिद्धिविधिः । तथा हि—

६।१३६-१४३।—रेखायुतं स्थूलपीतमर्थात् प्रौढं शुचिदेशगतं सरोवरस्थं मण्डूकमेकं संगृह्णीयात् । एकस्मिन् मृण्मये नूतने घटे तं निदध्यात् । तत्र घटे एकपलमितं पवित्रं सूतं निक्षिपेत् सरावेण तस्य घटस्य मुखमाच्छादयेत् पुनस्तं घटं पञ्चवारं जतुभिर्वेष्टयेत्, तथा यतितव्यं यथाण्वपि जलं तत्र न प्रविशेत् । कुम्भे च मन्त्रं लिखेत् । मन्त्रस्वरूपं यथा—

६।१४४-१४८।—ओं ऐं क्लीं स्त्रीं ह्लीं श्रीं हूं आं ह्रौं हसखफ्रें स्फ्रों स्हौंः ग्लूं क्षूं क्षौं फ्रौं क्रीं क्रं जूं ब्लौं वलौं व्रीं क्लूं रव्रौं कामकलाकालि रक्ष रक्ष हं हं हं लं लं वं फट् फट् फट् स्वाहा ।

६।१४९-१५०।—नद्यां यत्र जलप्रवाहस्तत्र हस्तमात्रं खनित्वा घटं तस्मिन् गर्ते संस्थापयेत्, उपरिष्टात् बालुकाः देयाः । यथा तदुपरि प्रवाहः प्रचलेत् तथा विधेयम् । षण्मासावधि घटमिह यत्नतः संरक्षेत् । क्षुधान्वितो भेकस्तत्स्थं सूतं पलमितं प्रत्यहं भक्षयेत् ।

६।१५१-१५७।—प्रत्येकं चतुर्दश्यां तस्मै भेकाय साधको बलिं दद्यात् । यतो हि भेकरूपा स्वयं भगवती तं बलिं गृह्णाति, अतो देवीबुद्ध्यैव तस्य पूजा कर्तव्या । सूतस्तदुदरे स्वयं बद्धो भवेत् । षण्मासानन्तरं नद्यास्तं घटमानीयैकान्तेऽन्धकारमये च गृहकोणे स्थापयेत् । तत्र घटे छिद्रमेकं विधाय तेन च्छिद्रेण षण्मासपर्यन्तं प्रतिमासमेकवारं हिंगुमिश्रितं पलमितं जलं निक्षेपणीयम् । संवत्सरे पूर्णे सति तं कुम्भं बहिर्निष्कास्यान्तरीक्षे शिक्याद्याधारे संरक्षेत् । तत्र विघ्नकरेभ्यो देवदानवराक्षसेभ्यस्त्राणाय मन्त्रेण तदवगुण्ठनं प्रतिदिनं कुर्यात् । यद्यपि मन्त्रेणावगुण्ठनायावद्येरुल्लेखो न विद्यते तथापि रक्षायां सावधानतया निर्देशेन तथाचरणं कल्प्यते ।

६।१५८-१६९।—तत्र गुटिकासिद्धयङ्गभूतस्य घटावगुण्ठनस्य मन्त्रो यथा—
हूं हूं हूं कामकलाकालि यक्षराक्षसभूतप्रेतपिशाचकूष्माण्डजम्भकयोगिनीडाकिनीस्कन्दवेतालक्षेत्रपालविनायकघोणकगुह्यकविनायकेभ्यो रक्ष रक्ष स्वाहा ।

अनन्तरं प्रथमे मासि कृष्णधुत्तूरवृक्षस्य पलमितं रसं द्वितीये मासि तुलसीरसं तृतीये मासि गजपिप्पलीरसं चतुर्थे मासि भृङ्गराजरसं पञ्चमे मासि लक्ष्मणारसं षष्ठे मासि श्वेतमूलवचापत्ररसं कुम्भे छिद्रेण दद्यात् । अतीतेष्वष्टादशमासेषु महिषबलिं तस्मै दद्यात् । ततो वस्त्रैः करं वेष्टयित्वा सिन्दूरारुणवर्णं तं भेकं घटान्निष्कासयेत्

यावत्पर्यन्तं न वमति तावत् पर्यन्तं तं भेकं शनैः धूनयेत् । तद्वान्तं रक्तवर्णं पूजास्थाने समानीय तत्र देव्याः प्राणप्रतिष्ठापूर्वकं षोडशोपचारैः पूजामाचर्य तस्या अनुज्ञामासाद्य च शिखायां समन्त्रं तां भेकवान्तिं बध्नीयात् । इयमेव गुटिकानाम्नाभिधीयते । शिखाया-मस्या धारणमन्त्रस्तु—

६।१७०-१७१ —ओं हसफ्रीं ह्रीं क्लीं क्रों ग्लूं सर्वसिद्धिं देहि देहि स्वाहा ।

६।१७१-१८४।—गुटिकासिद्धेः फलश्रुतिरभिहिता । यत्राणिमाद्यष्टसिद्धयोऽपि भवन्ति का कथान्यासां सिद्धीनाम् । सर्वमेतत्प्रसादेन सुलभं भवति ।

६।१८५-१९२।—तालवेतालसिद्धिविधिः । तथा हि यदि कश्चिद् वीरो महायुद्धे साधकसंमुखे पतित. मृतश्च तर्हि तं सशिरस्कं समादाय श्मशानं साधक आगच्छेत् । तत्र स्वयं शुचिः स्नातः कृत्यनित्याह्निकक्रियः कृष्णपक्षस्य चतुर्दश्यां तिथौ रात्रौ तं शवमारुह्य सहस्रं द्विसहस्रं वा त्रैलोक्याकर्षणमन्त्रं जपेत् । पश्चाद्देवी करालिनी तस्मिन् शवे प्रविशति । तत्समये पूर्वत आनीतं वध्यं चौरं बलिं दद्यात् । अस्य नरबलेर्दानं समन्त्रं भवति । तन्मन्त्रस्तु—

ओं ऐं क्लीं स्हौः स्फ्रों ग्लूं ह्रीं क्रों हसखफ्रें क्रौं क्षौं कामकलाकालि बलिं गृह्ण गृह्ण सिद्धिं मे देहि देहि दापय दापय स्वाहा । अनन्तरं तालवेतालौ सिद्धौ भवतः ।

६।१९३-१९६।—तालवेतालसिद्धिफलश्रुतिः ।

६।१९७—अत्रान्येषां प्रयोगाणां समष्ट्याभिधानम् । अन्यकालीपूजाविध्य-ङ्गतया डामरयामलादिग्रन्थेषु ते वर्णिताः सन्ति, तत एवावगन्तव्याः । ग्रन्थकृतः स्वभावः पटलान्ते अग्रिमपटलविषयमवतारयति । परमिह तथा न तेन कृतम् । अपि तु ग्रन्थान्तराभिहितप्रयोगाणां दिक्प्रदर्शनं कृतं प्रसङ्गपतितत्वादिति विशेषोऽव-धारणीयः ।

सप्तमः पटलः ।

७।१।—पटलेऽस्मिन् द्वौ विधी मुख्यतः प्रतिपादितौ । एको हवनविधिरपरश्च योगविधिः । अत एव हवनविध्यन्तर्गतस्य वह्निस्थापनस्य जिज्ञासा ।

७।२-७।—साधकः होमेनेष्टं साधयितुमर्हति । अत्र स्थानस्य होमीयद्रव्यस्य होतुश्च भवत्यपेक्षा । तत्र स्थानप्रसङ्गे प्रथमं कथयति पूर्वोत्तरप्लवं सुन्दरं मण्डलमा

रचनीयम् । मण्डलपदमिह पिण्डिकावाचकं न तु यन्त्रपरम् । नानार्थकपदस्य प्रसङ्गतोऽर्थनिर्णयदर्शनात् ।

द्वात्रिंशदङ्गुलमितो गर्भो यत्राभिजायते ।
एतादृशो मण्डलस्तु चक्राकारः सुवर्तुलः ।। गु० ख० ११।१७-१८।। इति ।

तत्र च मण्डले त्रिकोणं षट्कोणं नवकोणं वा कामनानुरूपं करणीयम् । कामना-भेदाद् होमस्य मण्डले द्रव्ये काष्ठे रीतौ च दृश्यते भेदः । अत एव फलस्यान्नस्य पुष्पस्य वस्त्रस्य रत्नस्यान्यपदार्थस्य च होमे पृथक् फलाभिधानं शास्त्रेषु श्रूयते । देवीं ध्यायता साधकेन समद्भिः सर्पिषा च होमः कर्तव्यः । यद्यपि जपानन्तरं तद्दशांश-होम इति साधारणी रीतिस्तथापि कामनाविशेषसिद्धयै तद्विपरीताचरणनिर्देशोऽपि विशेषरीतितया भवितुमर्हति । तथाहि कामनाविशेषमासाद्य होता विशेषद्रव्येण विशेष-रीत्या विशेषमण्डले होमं करोति चेदनन्तरं जपमपि गुरूपदिष्टसंख्याकमिष्टदेव्यास्त-न्निर्दिष्टपद्धत्या च कुर्यादिति शास्त्रस्वारस्यम् ।

७।८-१४।—मण्डले त्रिकोणादिकं निर्माय साधकः शुचिः कृतनित्यक्रियश्च करन्यासं षडङ्गन्यासं च कुर्यात् । पुनः हृदिस्थितामिष्टदेवतां ध्यायन् अग्न आयाहि वीतये गृणानो हव्यदातये । निहोता सत्सि बर्हिषि ।। इति ऋ० वे० ६।१६।१० । मन्त्रेण वह्निमावाह्य अग्नये रोचमानाय इति मन्त्रेण तं स्थापयेत् । मन्त्रोऽयमस्माक-मपरिचितः स्थापनं चाग्नेर्मण्डलस्येशानकोणे कर्तव्यम् । होमः कर्तव्यः, आहुतिश्च कामनानुरूपा पुष्पस्य फलस्यान्नस्यान्यवस्तुनो वा भवितुमर्हति । अनन्तरमष्टोत्तरं शतं न्यूनतमं लक्षं वाधिकतमं जपं कुर्यात् । जपश्चेष्टदेवताया मन्त्रस्य यादृशी कामना तथासंख्याको विधेयः । महतीच्छा चेत्तस्याः सिद्धयै लक्षं जप्तव्यं लघ्वीच्छा यदि तर्हि तत्सिद्ध्यर्थमष्टोत्तरं शतमेव जप्तव्यम् इति ग्रन्थकृदाशयः—

"कामना गौरवादेव होमो गौरवमिच्छति"

इति पद्येनावगम्यते । होमपदमुपलक्षणं जपमपि तथा बोधयति ।

७।१६।—एकेन तद्द्रव्येण यत्फलं भवति मिश्रितेन तेनैव द्रव्येण फलान्तरमपि सिद्ध्यतीत्याशयः ।

७।१७-२८।—कस्य पुष्पस्य होमेन किं फलं भवतीति स्फुटमिहाभिहितम् । अष्टत्रिंशत् पुष्पाणि इहाभिहितानि ।

७।२६-३६।—फलाहुतिफलानीहाभिहितानि । षड्विंशतिफलानामाहुत्या तत्संख्याकफलावाप्तिकथा यथायथमभिहिता ।

अत्रानभिहितेनापि फलेन होमो भवितुमर्हति ,तत्फलहोमस्य फलमप्यन्यदेवेहानुक्तं भवतीति शास्त्रकृतोऽस्य विश्वासः ।

७।३७-३६।—अन्नाहुतिफलानीहाभिहितानि । विविधविधानि फलानि अन्नविशेषाहुत्या लब्धुमर्हति साधक इति तदभिप्रायः ।

७।४०-४१।—रसाहुतिफलाभिधानम् ।

७।४२-५५।—विविधद्रव्याणां वस्त्रमणिवस्तुप्रभृतीनामाहुत्या नानाविधानि फलानि लब्धुमर्हति साधक इति ।

७।५६-५८।—समिधां भेदेन होमस्य फलेऽपि भेदो भवतीत्यभिहितम् ।

७।५६-७७।—मांसाहुतिफलानि कथितान्यत्र ।

७।७८-७६।—ब्राह्मणवैश्ययोर्महामांसहोमार्पणयोरनधिकारः क्षत्रियशूद्रयोरपि वैकल्पिकोऽधिकारः । द्विजातिपदस्य ब्राह्मणवैश्ययोरर्थयोः संकोचः ।

७।८०-६६।—पक्षिमांसहोमफलानि कथितान्यत्र ।

७।६७-६६।—आहुतिनिर्माणपरिमाणयोरभिधानम् । घृतमधुदधिदुग्धफाणितेक्षुदण्डतिलशर्करासु अन्यतमः सर्वोऽपि आहुतीयफलान्नमांसान्यद्रव्यवस्तुषु मिश्रितव्यः । आहुतीयपुष्पाणि तु समिद्घृतमधुमिश्रितानि कार्याणि । हवनावसरे हवनीयद्रव्यस्याग्नौ प्रक्षेपणे त्रयः कल्पाः भवन्ति—प्रसृतिरर्धमिता त्रिपर्वप्रमिता वा हवनसामग्री प्रक्षिप्यते । अत्रोत्तरोत्तरस्य निन्द्यता पूर्वपूर्वस्य च प्राशस्त्यम् अभ्यर्हितं पूर्वमिति पाणिनीयानुसारात् लोकव्यवहारे तथैव दर्शनाच्च । प्रसृतिरर्धाञ्जलिस्ततोऽर्धमर्धमितम् चुटकीपरिमितम् त्रिपर्वप्रमितम् भवति अंगूष्ठाकनिष्ठामध्यमानामङ्गुलीनां मेलनेन यावद् द्रव्यं ग्रहीतुं शक्यमित्यर्थः ।

७।६६-१०२।—कीदृशे कर्मणि कीदृशं कुण्डं विधाय होमः करणीय इति प्रसङ्गप्राप्तजिज्ञासापनोदाय कुण्डविवरणमिह प्रस्तुतम् । शान्तिपुष्ट्यादिकर्मणि चतुष्कोणं कुण्डं भवति मारणोच्चाटनद्वेषवशीकरणादिकर्मसु त्रिकोणं कुण्डं भवति ।

स्तम्भनमोहनादिकर्मसु वर्त्तुलं कुण्डं भवति । भुक्तिमुक्तिकामनया दीर्घं किन्तु त्रिकोणवर्तुलातिरिक्तचतुष्कोणात्मकमेव कुण्डं भवति अन्तःकरणप्रामाण्यात् फलस्वभावानुरूप्याच्च । अथवा यस्य फलस्य कृते यादृशकुण्डस्यारचनं प्रतिपदोक्तं शास्त्रे तथा विधेयम् अनुक्तावूर्ध्वोक्तमनुसरणीयम् ।

एवञ्च मण्डलारचनं स्थापनमग्नेः कामनानुरूपा होमसामग्री होमानन्तरं जपविधानं होमाङ्गं कर्म होतृस्वरूपं प्रक्षेपणीयहवनपरिमाणकल्पः विविधं हवनकुण्ड स्वरूपं चेति सुस्पष्टं विषया इह साङ्गोपाङ्गमभिहिताः । प्रकरणं चैतत्समाप्तम्

अधुना प्रकरणान्तरं योगविधेरारभ्यते ।

७।१०२-१०५।—वायुरोधेन षट्चक्राणां शरीरान्तःस्थितानां भेदनं योगस्वरूपम् । मूलाधारस्वाधिष्ठानमणिपूरानाहतविशुद्धाज्ञात्मकानि षट्चक्राणि प्रसिद्धानि सन्ति । योगाभ्यासे सति प्रयोगाः सिद्धिदायिन्यो लघुतां भजन्ते । सविधि योगमभ्यसन् नरः परार्द्धशतजीवितां लब्धुमर्हति इति योगविधिस्तन्माहात्म्यं चेह निर्दिष्टं ग्रन्थकृता ।

७।१०६-१४२।—योगोपकारिणीं नाडीमथ च वायुगतिं तदीयप्रकृतिं च परिचाययति ग्रन्थकारः । येन नाडीशोधने वायुगतिरोधे साहाय्यं लभेत साधकः ।

७।१४३-१४७।—योगानुकूलं स्थानं निर्दिशन् साधकस्याचारमभिदधाति ग्रन्थकृत् । साधकाचारान्तर्गतमेव तस्य त्रिकालस्नानं समाहितान्तःकरणता न्यास-करणीयता भस्मानुलेपः कुशासने मृगचर्मणि वोपवेशनम् आसनाधारभूमिसमतलता गुरुगणेशदेवीनां च यथाशक्ति पूजा च समायान्ति ।

७।१४८-१५१।——योगविधिस्वरूपमभिदधात्यत्र ग्रन्थकृत् ।

७।१५२—१५९।—देव्या निराकारध्यानमभिहितम् । औपनिषदिकेन ब्रह्मणा तुलनीया देव्या निराकारता । तथाहि बृहदारण्यके ३।८।८।—मन्त्रेण्वस्य साम्यं दृश्यते ।

७।१६०-१६४।—षट्चक्रभेदनप्रक्रियाभिधीयते ।

७।१६५-१६६।—षट्चक्रभेदनफलश्रुतिः । वैदिकेषु कर्मकाण्डेषु यज्ञयागादिषु नैष्ठिकानां दृढं विश्वस्तानां भारतीयजनानामिह तान्त्रिके योगमार्गे प्रवर्तनार्थं

यज्ञादिष्वभ्यर्हितानां फलश्रुतौ समुल्लेखः । अतएव राजसूयाश्वमेधवाजपेयपुण्डरीक विश्वजितामुद्धरणम् ।

७।१६७-१६६।—कुण्डलिन्याः स्वस्थाननिवेशप्रक्रियाऽभिहिता

७।१७०-१७५।—अस्य योगाभ्यासस्य माहात्म्यं कथितमत्र ।

योगस्य मोक्षसाधकता न तु प्रयोगान्तराणामिति विशेषकथया योगस्योत्कर्षः सिद्धिदायकप्रयोगाणामपकर्षश्च प्रतिपादितः ।

७।१७६-१८१।—उत्तमः कल्पः मोक्षस्य परमनिःश्रेयसस्य चरमपुरुषार्थस्य च कृते यत्नः । अधमश्च कल्पः सिद्धिप्राप्त्याकाङ्क्षा । यद्यपि योगेन सिद्धयोऽपि लब्धुं शक्यन्ते तथापि मोक्षार्थमेव योगस्योपयोगः कर्तव्यः । अत्र योगविधौ असमर्थैः साकाराया देव्या ध्यानं कर्तव्यम् । ध्यानमपि ऐहिकं सुखभोगादिकमामुष्मिकं च मोक्षं साधयति ।

७।१८१-१६५।—देव्याः साकारस्वरूपध्यानम् ।

७।१६६-२००।—ध्यानस्य विविधसिद्ध्युपायताभिधानम्

७।२०१-२०६।—पूजायाः कोटित्रयनिर्देशः । उत्तमा योगविधिः मध्यमा मानसी पूजा ध्यानात्मिका अधमा बाह्यपूजा । कलियुगे बाह्यपूजायाः प्राधान्यम्, द्वापरे ध्यानस्य प्राधान्यम् । कृते त्रेतायां च युगयोर्योगस्य प्राधान्यम् । योगः गुरुगम्यः कलौ युगे न संभवति । अत एव न्यासपूजादिमाहात्म्यम् ।

भावनाया इह प्राधान्यम् इति कण्ठतोऽभिहितमत्र । यादृशी यत्र भावना तादृशी तस्य फलसिद्धिरित्याशयः ।

## अष्टमः पटलः ।

८।१-७।—षोढान्यासोपदेशार्थं भूमिका आरभ्यते ।

८।८-१०।—षोढान्यासस्य महत्त्वातिशयोऽत एव गोपनीयत्वं चाभिहितम् ।

८।११-१७।—षोढान्यासमनुष्ठाय लब्धसिद्धीनां राज्ञां नामानीह कीर्तितानि यैरिह पाठकानां प्रवृत्तिर्भवेत् ।

८।१८-५७—त्रिपुरासुराणामन्यथा संहारासंभवेन तैः साकं युद्धार्थमुद्यतं शिवं प्रति देव्या षोढान्यासोपदेशः कृत इति कथा। कवचमिवायं न्यासो धारकस्य संरक्षक इति महत्त्वातिशयप्रतिपादनचातुर्यं ग्रन्थकृतः । अतोऽस्य माहात्म्यकीर्तनबुद्धयैव त्रिपुरासुराणामन्यथा जेयत्वसंभावनाभावस्य तेभ्यो देवानां भीतेस्ततस्त्राणाय तेषां शिवशरणापन्नतायाः शिवेन षोढान्यासात्मकस्य कवचस्यास्य धारणेन विना तैः साकं पराजयशंकाया अथ च विलक्षणरथनिर्माणस्य च वार्ता परिकल्पिताऽभिहिता वा विद्यते।

८।५८-५९।—षोढान्यासस्य न्याससमष्ट्यात्मकस्य ऋष्यादयोऽत्र निर्दिष्टाः। मन्त्रो न्यासश्च प्रायः षडङ्गः सप्ताङ्गो वा भवति। ऋषिश्छन्दो देवता बीजं शक्तिः कीलकं विनियोगश्चेति वेदागमयोरुभयत्र समानरूपेण सन्ति प्रसिद्धाः। विनियोग पदमुपयोगपरम्।

८।६०-६१।—षोढान्यासान्तर्गतानां न्यासानां नामनिर्देशो यथा नृसिंहन्यासः, भैरवन्यासः, कामकलान्यासः, डाकिनीन्यासः; शक्तिन्यासः, देवीन्यासश्चेति।

८।६२-६८।—अत्र पंक्तिः विकीर्णा ग्रन्थश्च त्रुटित इति प्रतिभाति। ग्रन्थकारस्य नितरां सरला विमला च शैली यथाक्रमं विषयमुद्दिश्य तत्स्वरूपं प्रकाशयति। तस्मादिह प्रथममृष्यादि षडङ्गाभिधानं पुनः करन्यासं हृदयादि षडङ्गन्यासं च मुख्यन्यासस्य पूर्वाङ्गतया स्वीकृतं निर्दिश्य मुख्यन्यासस्य स्वरूपं समुद्घाटनीयं भवति। एतद्दृष्टया ६५ तम पद्यानन्तरं ६२ तमं पद्यं पठनीयम्। पूर्वापरसंबन्धस्य तथैव संरक्षणम् भवति। अत्राष्टौ मातृकावर्गा अभिहिताः येषामुपयोगस्तत्र सुलभः। यथास्थानपाठे तु अस्य पद्यस्य सङ्गतिरेव न दृश्यते। उपक्रमोपसंहारापूर्वताफलार्थ वादोपपत्तीष्वन्यतमस्यापि तात्पर्यनिर्णायकस्यात्र सामर्थ्यादर्शनात्।

६३ तः ६५ यावत् श्लोकाः पूर्वापरसंबन्धयुतानि ऋष्यादिकं षडङ्गं करन्यासं हृदयादिषडङ्गन्यासं च मुख्यन्यासस्य पूर्वाङ्गानि निरूपयन्ति। क्षां अंगुष्ठाभ्यां नमः क्षीं तर्जनीभ्यां स्वाहा क्षूं मध्यमाभ्यां वषट् क्षैं अनामिकाभ्यां वौषट् क्षौं कनिष्ठिकाभ्यां हूं क्षः करतल करपृष्ठाभ्यां फट्।

एवं क्षां हृदयाय नमः क्षीं शिरसे स्वाहा क्षूं शिखायै वषट् क्षैं नेत्रत्रयाय वौषट् क्षौं कवचाय हूं क्षः अस्त्राय फट् इति करन्यास हृदयादिषडङ्गन्यासरूपम्।

६६ तः ६८ यावत् पद्यानामभिप्रायो यद्यपि नास्माभिरधिगतस्तथापि किञ्चि-दूहेनोच्यते तत्सुधिया साधकेन विचारणीयम् । यतो हि मातृकान्यासपरिगणिताङ्गेषु न्यासस्यास्य निर्देशोऽथ च हल् वर्णा एव बीजतया निर्दिष्टाः सन्ति अतः एकपञ्चाशत् भवन्त्यङ्गानि न्यसनीयानि व्यञ्जनानि च पञ्चत्रिंशदेव सन्ति न स्वराणामिहोल्लेखः । षोडशस्वर स्थाने वर्गमध्यस्थानां कवर्गादिवर्णानां बिन्दुविशिष्टानाम् गं जं डं दं बं रं वं लं कं खं गं घं ङं अष्टावृत्त्याष्टसु स्थानेषु न्यासं कृत्वा पुनः कवर्गचवर्गयोर्वर्णानां बिन्दुयुतानाम् कं खं गं घं ङं चं छं जं झं ञं अष्टावृत्त्याऽष्टावङ्गानि न्यसनीयानि अनन्तरमेकैकं व्यञ्जनमादायैकैकस्याङ्गस्य न्यास इति पंक्त्यर्थः सङ्गच्छते ।

यद्यपि ज्वालामालीत्यादि नरसिंहस्य नामविशेषोल्लेखेन तदीयध्यानप्रदर्शनेन च नमो युक्तेन चतुर्थ्येकवचनान्तेन तेनात्र भाव्यं न्यासान्तरेषु तत्तद्देवनाम निर्देशवत् तथापि तन्निर्देशकपंक्तिविरहादिह ग्रन्थपातः प्रतीयते । अन्यथा तन्नामध्यानयोरिह वैफल्यं स्यात् । तस्मादवश्यं तन्निवेश्यं तथेति मम मतिः ।

न्यसनीयाङ्गक्रमस्तु इह निर्दिश्यते—

ललाटं, मुखवृत्तं, दक्षनेत्रं, वामनेत्रं, दक्षकर्णं, वामकर्णं, दक्षनासापुटं, वामनासा-पुटं, दक्षगण्डः, वामगण्डः, ओष्ठः, अधरः, ऊर्ध्वदन्ताः, अधोदन्ताः, मूर्धा (ब्रह्मरन्ध्रम्) जिह्वा, दक्षिणभुजमूलं, दक्षिणकूर्परः, दक्षमणिबन्ध, दक्षाङ्गुलीमूलम्, दक्षाङ्गुल्यग्रम्,, वामभुजमूलं, वामकूर्परः, वाममणिबन्धः, वामाङ्गुलीमूलम् वामाङ्गुल्यग्रम्, दक्षिण-पन्मूलम्, दक्षिणजानुमध्यम्, दक्षिणगुल्फः, दक्षपादाङ्गुलीमूलम्, दक्षपादाङ्गुल्यग्रम्, वामपन्मूलम्, बामजानुमध्यम्, वामगुल्फकं, वामपादाङ्गुलीमूलम्, वामपादाङ्गुल्य ग्रम्, दक्षपार्श्वम्, बामपार्श्वम्, पृष्ठं, नाभिः, जठरं, हृदयं, दक्षांसः, ककुत्, वामांसः, हृदयादिदक्षकरः, हृदयादिवामकरः, हृदयादिदक्षपादः, हृदयादिवामपादः, हृदयाद्युदरम् (?) हृदयादिमुखात्मकं व्यापकम् चेति । [ द्र० गु० ख० १ भागः, ६ पटलः, श्लोकः ५२३-२६ ]

अत्र सृष्टिक्रमः ककारादिक्षकारान्तानां वर्णानां यथाक्रममुच्चारणेनाङ्गस्पर्श-विधिः । क्षकारादिककारान्तवर्णानामर्थात् विलोमरीत्योच्चारणेनाङ्गस्पर्शविधिस्तु संहारक्रमः । मध्यादारभ्यान्तंयावदथ चादिममारभ्योपमध्यं यावदुच्चारणेनाङ्ग-स्पर्शः स्थितिक्रमः । अत्र मन्त्राङ्गयोर्व्यतिक्रमो न भवति केवलं क्रमे व्यतिक्रम इत्य-वधेयम् । नृसिंहन्यासे तु सृष्टिक्रमः संहारक्रमः सृष्टिक्रमः स्थितिक्रमश्च कर्तव्य इति चतुर्वारमङ्गस्पर्शः ।

८।६६-७५।—एकपञ्चाशन्नरसिंहनामानि अभिहितान्यत्र । एतान्येव गुह्य-कालीखण्डस्य नवमपटले [ १०२२-१०३० ] पर्वतनरसिंहन्यासप्रकरणे दृश्यन्ते । इहोल्लिखितैः सह तेषां नाम्नां साम्यमेवास्ति । कुत्रचिदिह दृश्यते पाठभेदः, स तु प्रामादिक एव । मातृकानुरोधेन यथा निर्दिष्टोऽत्र पठितः । गुह्यकालीखण्डस्य पाठ इह शुद्धः प्रतीयते । तथा हि वज्रायुध स्थाने वस्त्रायुधः विद्युज्जिह्वस्थाने विद्युज्जिह्वा घोरदंष्ट्र स्थाने घोरदंष्ट्रा पिङ्गसटस्थाने पिङ्गजटः प्रदीप्तस्थाने प्रदीपः रौद्रस्थाने महारौद्रः तेजोमय स्थाने सर्वतेजोमय इति पाठा अत्र विद्यन्ते । यद्यपि तात्त्विको भेदः वज्रायुधमात्राभिधानेऽस्ति नान्यत्र कुत्रापि तथापि भेदे सति प्रामादिकता तु सिद्ध्यत्येव ।

पर्वतनरसिंहन्यासो व्यापकः । अयं तु नरसिंहन्यासः व्याप्यस्तत्र शक्तिसहितः नरसिंहः । शिवस्य नृसिंहाकारताया आख्यानकम् [ गु० ख० ८।१०५६-११०५ ] अत्र तु केवलं नरसिंहः [ध्यानेन ] स्वरूपेण तिष्ठति ।

८।७६-८७।—नरसिंहध्यानमभिहितम् नात्र कश्चिद् विशेषः ।

८।८८-९१।—षोढान्यासान्तर्गतस्य द्वितीयस्य भैरवन्यासस्य ऋष्यादिषडङ्ग-मभिधाय करन्यासहृदयादिषडङ्गन्यासो च निर्दिष्टो । तथाहि क्रां अंगुष्ठाभ्यां नमः । क्रीं तर्जनीभ्यां स्वाहा, । क्रूं मध्यमाभ्यां वषट् । क्रैं अनामिकाभ्यां वौषट् । क्रौं कनिष्ठिकाभ्यां हूं । क्रः करतलकरपृष्ठाभ्यां फट्, इति करन्यासः । एवं क्रां हृदयाय नमः । क्रीं शिरसे स्वाहा । क्रूं शिखायै वषट् । क्रैं नेत्रत्रयाय वौषट् । क्रौं कवचाय हूं । क्रः अस्त्राय फट् इति

८।९२-९५।—मुख्यस्य भैरवन्यासस्य मन्त्रात्मकं स्वरूपम् । येनाङ्गेषु न्यासः स्यात् ।

ओं ऐं ह्रीं श्रीं क्रों ह्रौं हूं क्षूं क्रोध भैरवाय क्षूं हूं ह्रौं क्रों श्रीं ह्रीं ऐं ओं नमः इति मन्त्रस्वरूपम् । प्रतिमन्त्रं भैरवस्य नाम केवलं परिवर्तनीयम् । अङ्गानि एक पञ्चाशन्न्यसनीयानि पूर्वोक्तान्येव । परिवर्तनीयभैरवनामान्यनुपदमेवोच्यन्ते ।

८।९६-१०३।—एकपञ्चाशद् भैरवनामान्यभिहितान्यत्र । गुह्यकालीखण्डे नवमपटलेऽस्त्रभैरवन्यासे नामानीमानि समागतानि नात्र कश्चनोभयत्र भेदः ।

८।१०४-११३।—भैरवस्य ध्यानमभिहितम् नात्र कश्चन विशेषः । नावशिष्यते किमप्यभिधातुम् ।

८।११४-११५।—षोढान्यासान्तर्गतस्य तृतीयस्य कामकलान्यासस्य भूमिका माहात्म्यं सकलन्यासश्रेष्ठतायाः कीर्तनं च।

८।११६-११८।—कामकलान्यासस्य ऋष्यादिषडङ्गमभिलपति अथ च मुख्यन्यासपूर्वाङ्गम् करन्यासं हृदयादिन्यासं च कथयति। तथा हि क्लां क्लीं क्लूं क्लैं क्लौं क्लः इति करन्यासहृदयादिन्यासयोर्मन्त्रः। धरा बीजं ल भवति विधिश्च क भवति अत एव धरारूढो विधिः "क्ला" इत्यक्षरं षड्दीर्घाश्च आ ई ऊ ऐ औ अः इति तन्त्रप्रसिद्धाः।

८।११९-१२२।—कामकलान्यासस्य मन्त्रात्मकं स्वरूपमभिहितमिह। तथाहि आं स्क्रों हसखफ्रें स्हौः क्रीं क्रौं जूं ब्लौं क्लौं ग्लूं ब्रीं रव्रौं क्लूं ब्लूं क्लूं क्लीं क्लीं अनङ्गाय क्लीं क्रीं हूं क्रों स्क्रों कामकलाकालि स्क्रों क्रों हूं क्रीं क्लीं स्वाहा क्लूं क्लूं क्लूं क्लीं नमः।

प्रतिमन्त्रं कामदेवस्य नाम परिवर्तनीयम्। अन्यत्सर्वं बीजादिकं समानमेव स्यात्। एकपञ्चाशदङ्गानि पूर्वोक्तानि न्यसनीयानि। परिवर्तनीयकामदेवनामान्यनुपदमेवोच्यन्ते।

८।१२३-१३२।—एकपञ्चाशत्कामदेवस्य नामानि कथितान्यत्र गुह्यकाली खण्डस्य चतुर्दशतमे पटले एतान्येव नामानि प्रसङ्गादागतानि। उभयत्र साम्यमेव विद्यते नास्ति कश्चन भेदः।

८।१३३-१३९।—कामदेवस्य ध्यानमिहाभिहितम्

८।१४०-१४३।—षोढान्यासान्तर्गतस्य चतुर्थस्य डाकिनीन्यासस्योपक्रमः। समग्रैश्वर्यपात्रतालाभोऽस्य विशेषफलमभिहितम्। डाकिनीन्यासस्य ऋष्यादिकं षडङ्गमभिधाय करन्यासहृदयादिषडङ्गन्यासौ मुख्यन्यासपूर्वाङ्गौ कथितौ।

तथाहि—ख्फ्रां ख्फ्रीं ख्फ्रूं ख्फ्रैं ख्फ्रौं ख्फ्रः इत्येतानि षड् बीजानि नमः स्वाहा वषट् वौषट् हूं फडिति मन्त्रानाद्यन्तौ योजयित्वा हृदयादिन्यासः करन्यासश्च कर्तव्यः। उक्तान्येव षड्दीर्घयुतानि डाकिनीबीजानि भवन्ति।

८।१४४-१४६।—डाकिनीन्यासस्य मन्त्रस्वरूपम् ऐं सहक्लह्रीं ह्रीं श्रीं हूं स्त्रीं छ्रीं फ्रें क्लीं क्षूं क्रीं फ्रों क्रौं कालरात्रि डाकिन्यै नमः। आस्यापि न्यासस्य मातृ-

डाम्यासकारोक्तानि अङ्गान्येव न्यसनीयानि भवन्ति । सर्वत्र डाकिन्या नाम परिवर्तनीयम्

८।१४७-१५४।—एकपञ्चाशद्डाकिनीनामान्युक्तानि येषां न्यासे भवत्युपयोगः ।

८।१५५।—डाकिन्यः नमस्कृताः स्तुताः ध्याताश्च सत्य उत्तमां श्रियं प्रयच्छन्ति साधकेभ्यः, विपरीताचरणे तु तान् भक्षयन्त्येव इतीह कथितम् ।

८।१५६-१६८।—डाकिन्या ध्यानमत्रोपवर्णितम् । ध्यानानन्तरं न्यासः कार्य इति सर्वत्र योज्यम् ।

८।१६९।—षोढान्यासान्तर्गतस्य पञ्चमस्य शक्तिन्यासस्योपक्रमः । अस्यन्यासस्य शतं वासराणि यावदनुष्ठानेनावश्यमिष्टसिद्धिर्भवतीत्यभिहितम् ।

८।१७०-१७२।—शक्तिन्यासस्य ऋष्यादि षडङ्गमभिहितम् । मुख्यन्यासस्य पूर्वाङ्गौ करन्यासहृदयादिषडङ्गन्यासौ कथितौ । अग्न्यारूढम् आकाशबीजं रेफयुतं हकारमभिधत्ते । तथा च षड्दीर्घयुतैस्तैरिह पूर्वाङ्गौ न्यासौ करणीयौ । ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः इत्याद्यं नमः स्वाहा वषट् वौषट् हूं फडित्यन्तं मन्त्रं साधकः न्यासयोरुपयुञ्जीत इति भावः ।

८।१७३-१७८।—शक्तिन्यासस्य मन्त्रस्वरूपत्वम् । तथा हि ओं ह्रीं श्रीं हूं क्रीं क्लीं क्रों ग्लूं सूक्ष्माशक्त्यै क ख ह्रौं क्षूं क्रौं फट् फट् फट् स्वाहा । एवं मन्त्रान्तरेषु शक्तेर्नामानुपदं वक्ष्यमाणं यथाक्रमं परिवर्त्य कख इत्यक्षरयोः स्थाने चादिषड्व्यञ्जनवर्गाणामाद्याक्षरौ निवेश्य तयोः न्यासे उपयोगः कर्तव्यः । सप्तानामेषां मन्त्ररूपाणामावृत्तिश्चतुर्वारं कृत्वाष्टाविंशतिरङ्गानि न्यसनीयानि । एकत्र अः ह इति युगलवर्णस्थाने निवेशनीयमन्यत् सर्वं पूर्ववत् कार्यम् । पुनः षोडशस्वराणामेकैकं वर्णं वर्णयुगलस्थाने कृत्वा षोडशाङ्गानां न्यासः कार्यः । युगलवर्णस्थाने कादिपञ्चवर्गाणां तृतीयचतुर्थपञ्चमाक्षराणि अकारयुतानि विधाय सर्वमन्यत् पूर्ववत्कृत्वा पञ्चाङ्गानां न्यासः कार्यः । एवमष्टाविंशतिरेकं षोडश पञ्चेति सङ्कलनया पञ्चाशत् स्थानन्यासमन्त्राः संगच्छन्ते । ग्रन्थे निर्देशाभावेन एकपञ्चाशत्तमस्यान्तिममन्त्रस्य स्वरूपं किं भवेदिति सुधीभिः साधकैश्चिन्तनीयम् । न्यासोऽयं स्वतनौ साधकेन न कर्तव्यः किन्तु देव्यास्तनौ कर्तव्य इति विशेषोऽत्र शक्तिध्यानानन्तरं १९३ तमे पद्येऽभिहितम् ग्रन्थकृता । सुधीभिः साधकैः स्वयमपीह विचार्यानुष्ठातव्यम् ।

८।१७६-१८४।—एकपञ्चाशच्छक्तिनामान्यभिहितान्यत्र।

८।१८५।—एताः शक्तयः देव्या पारिषदाः देव्यास्तनौ संविष्टाः सन्तिष्ठन्ते। अतो देव्यास्तनौ एवास्य न्यासस्य कर्तव्यत्वं निर्दिष्टम्

८।१८६-१९२।—शक्तिध्यानमभिहितम्

८।१९३-१९४।—न्यसनीया स्थानगता इति पाठोऽत्र समुचितः प्रतिभाति। न्यसनीयं स्थानगता इति तु प्रामादिकः प्रतिभाति। मातृकानुरोधेन तथापाठ इह परिगृहीतः।

शक्तिन्यासस्य देवीतनुकर्तव्यताकनिर्देशः। ध्यानानन्तरं न्यासः कार्यः रीति-रियमनुक्तस्थलेऽप्यनुसर्तव्या। षोढान्यासान्तर्गतस्यान्तिमस्य षष्ठस्य देवीन्यासस्या-वतरणम्।

८।१९५-१९७।—देवीन्यासस्य माहात्म्यकीर्तनम्। यामलडामरभीमातन्त्र-कौलिकार्णवादितन्त्रेषु निर्दिष्टानां प्रधानतमानां देवीनां मन्त्रध्यानाभ्यां न्यासं साधकः स्वाङ्गेषु कुर्यात्। न्यासाङ्गानि मातृकान्यासकालोक्तान्येव ज्ञेयानि। अत एव न्यासेऽस्मिन् प्रत्येकं मन्त्रभेदो भवेदिति विभावनीयम्।

८।१९८-२०१।—देवीन्यासस्य ऋष्यादिषडङ्गमभिधाय करन्यासहृदयादि-न्यासौ षड्दीर्घयुतैः कामबीजैरर्थात् क्लां क्लीं क्लूं क्लैं क्लौं क्लः इत्येतैः करणीया विति निर्दिशति। सर्वमन्यत् समानं पूर्वोक्तमेवानुष्ठातव्यम्।

अत्र १९९ श्लोकस्यान्ते "वर्जिता" इत्युक्तं पदं तस्याभिप्रायो न ज्ञायते। विनियोगश्च कुत्रेति जिज्ञासैव जागर्ति।

८।२०२-२१०।—एकपञ्चाशद्देवीनां परिचयः। एषां ध्यानमन्त्रौ प्रसङ्गो पयोगिनाविति।

८।२११-२१५।—महालक्ष्म्याः मन्त्रध्याने कथिते स्तः। तत्र मन्त्र-स्वरूपम्—ऐं श्रीं ह्रीं क्लीं इति चतुरक्षरमन्त्रः।

८।२१६-२२०।—वागीश्वरीदेव्याः मन्त्रध्याने कथिते। तत्र मन्त्रः एका-दशाक्षरः—ओं ह्रीं ऐं ह्रीं ओं सरस्वत्यै नमः।

८।२२१-२२५।—अश्वारूढाया मन्त्रध्याने कथिते । तत्र मन्त्रः पञ्च-दशाक्षरः—ओं ह्रीं श्रीं हूं क्लीं आं अश्वारूढायै फट् फट् स्वाहा ।

८।२२६-२३१।—मातङ्गीदेव्याः मन्त्रस्वरूपस्य निर्देशः ।

ऐं ह्रीं श्रीं ओं नमो भगवति मातङ्गेश्वरि सर्वजनमनोहरि सर्वमुखरञ्जनि सर्वराजवशङ्करि सर्वस्त्रीपुरुषवशङ्करि सर्वदुष्टमृगवशङ्करि सर्वसत्ववशङ्करि सर्व लोकममुं मे वशमानय स्वाहा ।

८।२३१-२३४।—मातङ्गीदेव्या ध्यानमुक्तम् ।

८।२३४-२३६।—नित्यक्लिन्नायाः पञ्चदशाक्षरमन्त्रस्वरूपम्—ओं ऐं ह्रीं नित्यक्लिन्ने मदद्रवे ऐं ह्रीं स्वाहा ।

८।२३६-२३९।—नित्यक्लिन्नाया ध्यानम्

८।२३९—२४०।—भुवनेश्वर्यास्त्र्यक्षरमन्त्राभिधानम् । तद्यथा—आं ह्रीं क्रों इति । एतदीयमाहात्म्याभिधानं च

८।२४१-२४३।—भुवनेश्वर्या ध्यानम् ।

८।२४३-२४५।—उच्छिष्टचाण्डाल्या द्वाविंशत्यक्षरस्य मन्त्रस्य स्वरूपम्—उच्छिष्टचाण्डालिनि सुमुखि देवि महापिशाचिनि ह्रीं ठः ठः ठः ।

८२४६।२४८।—उच्छिष्टचाण्डाल्या ध्यानम् ।

८।२४९-२५२।—आरम्भेऽस्य श्रेष्ठतायाः प्रतिपादनम्, पुनश्च मन्त्रस्वरूप-निर्देशः । पञ्चकूटात्मको भैरवीमन्त्रः । तथा हि—सहक्लूं हकल क्ष्रूं.........
[फेत्कारीकूटं] लक्षमह्लजरक्रव्य्रऊं क्ष्सह्लमब्य्रऊं [?]

८।२५३-२५५।—भैरव्या ध्यानम् ।

८।२५६-२५७।—शूलिन्याः पञ्चदशाक्षरो मन्त्रः—ज्वल ज्वल शूलिनि दुष्टग्रहं हूं फट् स्वाहा ।

८।२६२-२६३।—वनदुर्गाया नवाक्षरमन्त्रः—ओं ऐं श्रीं ह्रीं छ्रीं हूं क्रों स्वाहा।

८।२६४-२६६।—वनदुर्गायाः ध्यानम्।

८।२६६।—त्रिपुटायास्त्र्यक्षरो मन्त्रः—श्रीं ह्रीं क्लीं।

८।२६७-२६९।—त्रिपुटाया ध्यानम्।

८।२७०-२७२।—त्वरिताया दशाक्षरो मन्त्रः—ओं ह्रीं हूं आं क्रों स्त्रौं हूं क्षौं ह्रीं फट्।

८।२७२-२७६।—त्वरिताया ध्यानम्।

८।२७७-२८०।—अघोरायाः पञ्चविंशत्यक्षरात्मको मन्त्रः—ह्रीं श्रीं क्रों क्लीं स्त्रीं ऐं क्रौं छ्रीं फ्रें क्रीं हसखफ्रें हूं अघोरे सिद्धि मे देहि दापय स्वाहा।

८।२८१-२८३।—अघोराया ध्यानम्।

८।२८४-२८६।—जयलक्ष्म्या मन्त्रः।

ऐं ह्रीं श्रीं क्लीं खफ्रीं (?) जयलक्ष्मि युद्धे मे विजयं देहि ह्रौं आं क्रौं फट् फट् फट् स्वाहा।

८।२८६-२८८।—जयलक्ष्म्या ध्यानम्।

८।२८९-२९०।—वज्रप्रस्तारिणीमन्त्रः—ओं ह्रीं श्रीं क्लीं ह्रौं क्रों वज्रप्रस्तारिणि स्वाहा।

८।२९०-२९३।—वज्रप्रस्तारिण्या ध्यानम्।

८।२९४।—पद्मावत्याः सप्ताक्षरमन्त्रः—ह्रीं पद्मावति स्वाहा।

८।२९५-२९६।—पद्मावत्या ध्यानम्।

८।२९६-२९८।—अन्नपूर्णायाः सप्तदशाक्षरमन्त्रः—

ह्रीं नमो भगवति माहेश्वरि अन्नपूर्णे स्वाहा ।

८।२६८-३००।—अन्नपूर्णाया ध्यानम् ।

८।३००-३०४।—कालसंकर्षिण्याः षट्त्रिंशदक्षरमन्त्रः—ओं ह्रीं श्रीं क्लीं ऐं क्रौं क्रीं आं हूं क्षूं ह्रौं ग्लूं क्रौं हसखफ्रें क्ष्रूं फ्रों छ्रीं फ्रें क्लौं ब्लौं क्लूं स्हौः स्फ्रों ह्रौं जूं क्रम्लैं कालसंकर्षिणि हूं हूं स्वाहा ।

८।३०४-३१८।—कालसङ्कर्षिण्या ध्यानम् ।

८।३१९-३२०।—धनदामन्त्रः—क्ष्रूं [ ? ]

८।३२०-३२४।—धनदाया ध्यानम् ।

८।३२५-३२७।—कुक्कुटया अष्टादशाक्षरमन्त्र—ऐं ह्रीं श्रीं क्लीं हसखफ्रें हूं कुक्कुटि क्रीं आं क्रों फ्रें फ्रों फट् फट् स्वाहा ।

८।३२८-३३०।—कुक्कुटयाः ध्यानम् ।

८।३३१-३३२।—भोगवत्यास्त्र्यक्षरो मन्त्रः—आं क्रों ह्रौं ।

८।३३३-३३४।—भोगवत्या ध्यानम् ।

८।३३५।—शबरेश्वर्या दशाक्षरमन्त्रः —ओं ह्रीं आं शबरेश्वर्यै नमः ।

८।३३६-३३८।—शबरेश्वर्या ध्यानम् ।

८।३३९-३४२।—कुब्जिकायाः मन्त्रः—हलक्षकमह्लसवरयऊं क्षम्लकस्हरयव्रूं रक्षम्लह्लकसछव्य्रऊं हसखफ्रें ह्लहलवरयकऊं लक्षमह्लजरक्रव्य्रऊं ब्लहतह्लसचैं सहक्लह्रीं खफ्रें ।

८।३४३।—ध्यानमस्य पूर्वमुक्तम्

८।३४४-३४६।—सिद्धिलक्ष्म्याः षोडशाक्षरमन्त्रः—ह्रीं हूं फ्रें छ्रीं स्हौः क्रीं क्रों फ्रें क्लीं श्रीं फ्रों जूं ब्लों क्रम्लैं स्वाहा ।

८।३४९-३५१।—सिद्धिलक्ष्म्याः ध्यानमभिहितम्

८।३५२।—बालायास्त्र्यक्षरमन्त्रः—ऐं क्लीं सौः ।

८।३५३-३५६।—बालायाः ध्यानम्

८।३५७-३५९।—त्रिपुरसुन्दर्याः वक्ष्यमाणमन्त्रस्य माहात्म्याभिधानम् ।

८।३६०-३६२।—त्रिपुरसुन्दर्याः मन्त्रः—महलह्रीं महह्लह्रीं कलह्रीं [?] ।

८।३६३।—मन्त्रस्य फलश्रुतिः

८।३६४-४१४।—त्रिपुरसुन्दर्याः ध्यानम् ।

८।४१५-४१६।—तारायाः मन्त्रस्वरूपम्—ह्रीं त्रीं हूं फट् ।

८।४१७-४२६।—तारायाः ध्यानम् ।

८।४२७-४३०।—दक्षिणकाल्याः द्वाविंशत्यक्षरात्मकस्य मन्त्रस्य माहात्म्यकीर्तन-पूर्वकं स्वरूपम्—क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं दक्षिणकालिके क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं स्वाहा ।

८।४३१-४३२।—दक्षिणकाल्याः महिम्नः कीर्तनम् ।

८।४३३-४४०।—दक्षिणकाल्याः ध्यानम् ।

८।४४१-४४३।—छिन्नमस्ताया मन्त्रस्य माहात्म्यं भयङ्करता च प्रतिपादिता । अत्राष्टसिद्धीनामुल्लेखस्तेनाणिमादिमहासिद्धयोऽष्टौ संग्रहणीयाः ।

८।४४४-४४५।—छिन्नमस्तायाः षोडशाक्षरमन्त्रस्य स्वरूपम्—ओं श्रीं ह्रीं ऐं वज्रवैरोचनीये हूं हूं फट् स्वाहा" ।

८।४४६-४५९।—छिन्नमस्तायाः ध्यानमुक्तम् ।

८।४६२-४६१।—त्रिकण्टक्याः मन्त्रस्वरूपम्—हूं श्रीं रट्रं क्रों क्रम्लओं क्षः [?]

८।४६२-४६५।—त्रिकण्टक्याः ध्यानम् ।

८।४६६-४७०।—नीलपताकायाः षट्षष्ट्यक्षरमन्त्रस्वरूपम्—

ओं नमः कामेश्वरि कामाङ्कुशे कामप्रदायिके भगवति नीलपताके भगान्तिके महेश्वरि क्लूं नमोऽस्तु ते परमगुह्ये हूं हूं हूं मदने मदनदेहे त्रैलोक्यमावेशय हूं फट् स्वाहा ।

अत्र मन्त्रस्य यदि षट्षष्ट्यर्णत्वनिश्चयस्तदा स्फुटं ग्रन्थपातः । महेश्वरि योगार्थमिह पंक्तिः काचिन्नास्ति । अयुतार्णमन्त्रे समावेशेनेह समावेशितः । सुधिया साधकेन विचारणीयम् ।

८।४७१-४७३।—नीलपताकादेव्याः ध्यानम् ।

८।४७४-४७७।—चण्डघण्टाया अष्टात्रिंशदक्षरस्य मन्त्रस्य स्वरूपम्—क्रीं क्रीं हूं हूं हूं हूं क्रों क्रों क्रों श्रीं श्रीं ह्लीं ह्लीं छ्रीं फ्रें स्त्रीं चण्डघण्टे शत्रून् स्तम्भय स्तम्भय मारय मारय हूं फट् स्वाहा ।

८।४७८-४८१।—चण्डघण्टाया ध्यानम् ।

८।४८२-४८५।—चण्डेश्वर्याः सप्तविंशत्यर्णस्य मन्त्रस्य स्वरूपम्—ओं ह्रीं श्रीं हूं क्रों क्रीं स्त्रीं क्लीं स्हजहलक्षम्लवनऊं क्षमक्लह्रहसव्य्रऊं क्ष्लह्मकहनसक्लईं सस्लक्षकमह्रव्रूं क्ष्लह्मव्य्रऊं चण्डेश्वरि श्रौं छ्रीं फ्रें क्रीं हूं हूं फट् फट् स्वाहा ।

८।४८६-५०१।—चण्डेश्वर्या ध्यानम् ।

८।५०२-५०४।—भद्रकाल्या नवाक्षरमन्त्रस्य स्वरूपम्—ओं फ्रें स्त्रीं हूं छ्रीं क्रौं श्रौं हसखफ्रें क्लीं ह्रीं । अत्र पंक्त्यनुसारं दशाक्षरता भवति मन्त्रस्य अतः "नवाक्षरो महामन्त्रः" इति पंक्तिश्चिन्त्या सुधीभिः साधकैरिह ।

८।५०५-५१४—भद्रकाल्याः ध्यानम् ।

८।५१५-५१८।—गुह्यकाल्याः सप्तदशाक्षरमन्त्रस्य स्वरूपम्—ह्रीं क्लीं फ्रें हूं क्रौं गुह्यकालि क्रौं छ्रीं हसखफ्रें फ्रों छ्रीं स्त्रीं स्वाहा । अस्येह माहात्म्यमपि कीर्तितम् ।

८।५१९-५२९।—गुह्यकाल्याः ध्यानम् ।

८।५३०-५३६।—गुह्यकाल्याः माहात्म्यकीर्तनम् ।

८।५३७-५३८।—अनङ्गमालामन्त्रस्वरूपम्—ओं ऐं आं ह्रीं हूं क्रों श्रौं क्रीं

क्रौं फ्रें अनङ्गमाले स्त्रियमाकर्षय आकर्षय त्रुट त्रुट छेदय छेदय हूं हूं फट् फट् स्वाहा ।

८।५३६-५४४।—अनङ्गमालाया ध्यानम् ।

८।५४५-५५०।—माहात्म्यकीर्तनपूर्वकं चामुण्डाया एकसप्तत्यक्षरमन्त्रस्वरूपम्—ओं क्रों क्रीं फ्रें फ्रों छ्रीं खौं हूं हसखफ्रें ब्लौं जूं ग्लूं ह्रीं क्रम्लें [ह्लौं] क्षूं क्रौं चामुण्डे ज्वल ज्वल हिलि हिलि किलि किलि मम शत्रून् त्रासय त्रासय मारय मारय हन हन पत पत भक्षय भक्षय क्रीं क्रीं ह्रीं ह्रीं हूं हूं फट् फट् स्वाहा ।

८।५५१-५६३।—चामुण्डाया ध्यानम् ।

८।५६४-५६७।—वाराह्या मन्त्रस्वरूपम्—ओं नमो भगवत्यै वाराहरूपिण्यै चतुर्दशभुवनाधिपायै वाराह्यै भूपतित्वं मे देहि दापय स्वाहा ।

८।५६८-५७५।—वाराह्या ध्यानम्

८।५७६-५७७।—बगलायाः एकत्रिंशाक्षरमन्त्रस्वरूपम्—

ओं नमो भगवत्यै पीताम्बरायै ह्लीं ह्लीं सुमुखि बगले विश्वं मे वशं कुरु कुरु स्वाहा ।

अत्र विश्वं मे च वशं प्रोच्येति ५७७ तमपद्यस्य तृतीयचरणे यदि पठ्यते, तदैकत्रिंशदर्णता मन्त्रस्येह संजायते । यथाश्रुतपाठे तु द्वात्रिंशदर्णता भवति ।

८।५७८-५८१।—बगलाया ध्यानम्

८।५८२-५८४।—जयदुर्गाया अष्टादशाक्षरमन्त्रस्वरूपम्—ओं क्रों क्लीं श्रीं ह्रीं श्रां स्त्रीं हूं जय दुर्गे रक्ष रक्ष स्वाहा ।

८।५८५-५८९।—जयदुर्गाध्यानम् ।

८।५९०-५९३।—नारसिंहीदेव्याः चत्वारिंशाक्षरस्य मन्त्रस्य स्वरूपम्—ओं आं क्रौं हूं जूं ह्रीं क्लीं स्त्रीं क्षूं क्ष्रौं फ्रों जूं फ्रें [रक्रां] जिह्वासटाघोररूपे दंष्ट्राकराले नारसिंहि ह्रौं ह्रौं ह्रौं हूं हूं हूं फट् फट् स्वाहा ।

८।५९४-६०६।—नारसिंहीदेव्या ध्यानम् ।

८।६०७-६०८।—ब्रह्माण्याः सप्ताक्षरस्य मन्त्रस्य स्वरूपम्—ओं आं ह्रीं ग्लूं क्रौं [क्रौं?] श्रीं फट् ।

८।६०९-६१२।—ब्रह्माण्याः ध्यानम् ।

८।६१३-६१५।—वैष्णव्याश्चतुर्विंशाक्षरमन्त्रस्य स्वरूपम्—ओं नमो नारायण्यै जगत्स्थितिकारिण्यै क्लीं क्लीं क्लीं श्रीं श्रीं श्रीं आं जूं स्वाहा ।

८।६१६-६२२।—वैष्णव्या ध्यानम् ।

८।६२३-६२६।—माहेश्वर्यास्त्रिंशदक्षरात्मकस्य मन्त्रस्य माहात्म्यकीर्तनं स्वरूपं च—ओं ह्रौं ग्लूं आं ह्रीं श्रीं हूं माहेश्वरि लक्षमह्लजरक्रव्य्रऊं स्हजहलक्षमलवनऊं क्षलह्मव्य्रऊं क्रम्लैं ब्लौं क्लौं फ्रें क्लूं क्रीं फ्रों जूं ग्लूं स्हौः हूं हूं फट् फट् स्वाहा ।

८।६२७-६३६।—माहेश्वर्या ध्यानम् ।

८।६३७-६३९।—इन्द्राण्याः देवत्वप्रापकस्य अष्टादशाक्षरस्य मन्त्रस्य स्वरूपम्—ओं ह्रीं श्रीं हूं इन्द्राणि ह्रीं ह्रीं हं हं क्षौं क्षौं फट् फट् फट् स्वाहा ।

८।६४०-६४६।—इन्द्राण्या ध्यानम् ।

८।६४७-६५१।—हरसिद्धाया द्विचत्वारिंशदक्षरात्मकस्य मन्त्रस्य स्वरूपम्—ओं ऐं ह्रीं श्रीं क्लीं क्रीं आं क्रों फ्रों हूं क्षूं हसखफ्रें फ्रें हरसिद्धि [द्धे] सर्वसिद्धिं कुरु कुरु देहि देहि दापय दापय हूं हूं हूं फट् फट् स्वाहा ।

अत्र हरसिद्धि इत्यस्य स्थाने हरसिद्धे इति समुचितः प्रतिभाति पाठस्तथापि मातृकानुरोधेन मूले संशोधनं न कृतम् । मन्त्रो हि संशोधनीयो न भवति । नाम्नोऽन्वर्थकत्वप्रतिपादनव्याजेन स्तुतिरप्यस्याः कृतात्र ।

८।६५२-६५५।—हरसिद्धाया ध्यानम् ।

८।६५६-६५८—फेत्कारिण्या विंशत्यक्षरात्मकस्य मन्त्रस्य स्वरूपम्—ओं क्रौं क्रौं हसखफ्रें हूं छ्रीं फेत्कारि वद वद देहि दापय स्वाहा ।

८।६५९-६६२।—फेत्कारिण्या ध्यानम् ।

८।६६३-६६५।—लवणेश्वर्या मन्त्रस्य स्वरूपम्—ऐं श्रीं आं ह्रीं हूं स्फ्रों स्हौः ख्फ्रें छ्रीं स्त्रीं ठ्रीं ध्रीं प्रीं थ्रीं ह्लीं ओं।

८।६६६-६७०।—लवणेश्वर्या ध्यानम्।

८।६७१-६७२।—नाकुलीदेव्या मन्त्रस्वरूपम्—क्ष्रः छ्रीं हूं स्त्रीं फ्रें [कामकला खण्डस्य १५।३०६ पद्यानुसारं मन्त्रोद्धारोऽत्र विहितः। अत्रत्यपंक्तेराशयो नावगतः। प्राय उभयत्र मन्त्रैक्यविवरणमुपलभ्यते।]

८।६७२-६७७।—नाकुलीदेव्या ध्यानम्।

८।६७८-६८१।—मृत्युहारिण्याः पञ्चविंशाक्षरस्य मन्त्रस्य स्वरूपम्—ओं ह्लीं श्रीं जूं फ्रां फ्रीं फ्रूं फ्रें ह्रौं स्हौः सौः स्हजहलक्षम्लवनऊँ तत्त्वमसि स्हजहलक्षम्लवनऊँ सौः स्हौः ह्रौं फ्रें फ्रूं फ्रीं फ्रां जूं श्रीं ह्लीं ओं।

अत्र रावास्ता इति मातृकानुरोधेन पाठ आदृतः, रावान्ता इति समुचितः पाठस्तथा सत्येव मन्त्रस्य पञ्चविंशाक्षरता चतुरक्षरीपदं च सङ्गच्छेते। अत्र तत्त्वमसीत्यस्यैकाक्षरता कूटे पठितत्वात्।

८।६८२-६८७।—मृत्युहारिण्याः ध्यानम्।

८।६८८-६९४।—कामकलाकाल्याः वक्ष्यमाणैः पञ्चविंशतिभिर्मन्त्रैः व्यापकन्यासः कर्तव्यः। तत्र विधिद्वयम्। एकमन्त्रेणैकवारं व्यापकं न्यस्येदिति। पञ्चविंशति मन्त्राणां निवेशेन पञ्चविंशतिवारान् व्यापकन्यासः कार्य इति प्रथमो विधिः। द्वितीयविधिस्तु सर्वेषां पञ्चविंशतिमन्त्राणामेकवारमुच्चारणम् एकवारमेव न्यासः कार्य इति। अस्याः सप्तदशीमन्त्रम् सर्वान् सानुस्वारान् मातृकावर्णानुच्चोदीर्य अन्ते नम इति योज्यमिति विशेषनिर्देशोऽप्यत्र विद्यते। येन प्रथमन्यासः कार्यः। चतुर्विंशतयश्चास्या मन्त्रा अग्रे वक्ष्यन्त एव।

८।६९५-७०८।—अत्र ये मन्त्रा अभिहितास्तेषां स्वरूपमग्रे त्रयोदशतमे पटले स्फुटी भविष्यति अतस्तत्र एवैतेषां स्वरूपस्य परिज्ञानं कर्तव्यम्। ध्यानमस्या देव्यास्तु प्रागेवास्मिन् ग्रन्थे २।१६-४३।—प्रदर्शितं सर्वेषामपि विशिष्य पृथक्त्वेनाभिहितम्।

८।७०६।—न्यासानन्तरं प्राणायाममथ च षडङ्गं हृदयादिकरादिन्यासं च विधाय शतमष्टोत्तरं मूलमन्त्रं त्रैलोक्याकर्षणाभिधं जप्त्वा न्यासं देव्यै समर्पयेत् ।

८।७१०।—न्याससमर्पणार्थं करे पुष्पस्य धारणमावश्यकम् । पुष्करपदं पुष्पस्योपलक्षणम् । पुष्करस्यार्थात् कमलस्य लाभे विशेषप्रीतिः ।

८।७१०-७१४।—न्याससमर्पणार्थं पद्यबद्धस्य मन्त्रस्य स्वरूपं निर्दिष्टम् ।

८।७१५-७१६।—बलिसमर्पणविधिस्तस्य मन्त्रश्चेह निर्दिष्टस्तत्र मन्त्रस्वरूपम्—ओं ह्रीं क्लीं स्त्रीं फ्रें खफ्रें हसखफ्रें स्हौः सौः स्हजहलक्षम्लवनऊँ एह्येहि भगवति कामकलाकालि इमं बलिं गच्छ गच्छ [गृह्ण गृह्ण] गृह्णापय गृह्णापय खादय खादय भक्षय भक्षय सर्वसिद्धिं प्रयच्छ वमदग्निमुखि फेत्कोटिपरिवृते हस हस ज्वल ज्वल प्रज्वल प्रज्वल हूं हूं हूं फट् फट् फट् नमः स्वाहा ।

अत्र गच्छयुगं [७१७ प्रथम चरणे] इत्यस्य स्थाने गृह्ण युगमिति पाठः समुचितः प्रतिभाति । तथा पाठस्तु मातृकानुरोधेनादृतः ।

८।७२०-७२४।—अनन्तरमुपसंहारोऽस्य षोढान्यासविधेः । अत एव संहारमुद्रया हृदये देव्या आधानम् । षोढान्यासमाहात्म्यम् षोढान्यासकर्तुः प्रशंसा एतत्कर्तुः कर्तव्यतानिर्देशश्चेति दिक् ।

**नवमः पटलः**

नवमे पटले कामकलाकाल्यास्त्रैलोक्यमोहनाभिधस्य कवचस्यावतरणम् । एतस्य माहात्म्यकीर्तनं मन्त्रमयमेतदीयं स्वरूपम्. एतदीयफलश्रुतिरेतस्य गोपनीयतायाश्च निर्देश इतीह सविशदमुपपादितानि ।

नास्य कवचस्य सकलसाधारणः साधकोऽधिकारी अपि तु कामकलाकाल्यास्त्रैलोक्याकर्षणमन्त्रविदः साधकस्येहाधिकारः । तथा चात्र स्फुटमुक्तम्—

लोभादन्ये ये प्रदद्युर्मूर्खास्त्ववक्त्रं विशन्ति ते ।
उपदेशं विना ये वै त्रैलोक्याकर्षणस्य हि ॥
त्रैलोक्यमोहनं नाम पठन्ति कवचं त्विदम् ।
सद्यस्ते मरणं यान्ति भक्षिता योगिनीगणैः ॥ [ ९।१७-१८ ]

अस्य माहात्म्यकीर्तनावसरे महाकालः पार्वतीं कथयति—

सर्वं नरस्य सुलभं न तु त्रैलोक्यमोहनम् ।
चिच्छेदिषूणां मूर्धानं सर्वस्वं ददतामपि ॥
राज्यं धनं स्त्रियः प्राणानुपढौकयतामपि ।
सर्वथा देवि नाख्येयं त्रिसत्यं ते ब्रवीम्यहम् ॥ [ ९।१३-१५ ]

९।२०-२३ ।—त्रैलोक्यमोहनकवचस्य ऋष्यादिनिर्देशः । अस्य विनियोगस्तु त्रिविधकार्यार्थमभिहितः । तथा हि पुरुषार्थचतुष्टयस्य धर्मार्थकाममोक्षात्मकस्य सिद्धये, देवतायाः प्रीत्यै, शत्रूणां नाशाय राज्यस्य च प्राप्त्यै विनियोगोऽस्येति स्फुटमभिहितम् ।

विनियोगोऽस्य कथितः पुरुषार्थचतुष्टये ।
देवीकामकलाकालीप्रीत्यर्थे च विशेषतः ॥
शत्रुक्षयार्थे राज्याप्त्यै प्रयोगोऽस्य वरानने । [ ९।२२-२३ ]

उपसंहारे कवचस्य गोपनीयतां निर्दिशन् ग्रन्थकृत् स्वकीयमिह संप्रदायं प्रदर्शयतीति विशेषः । तथा हि पराम्बा पराशक्तिस्वरूपा कामकलेह देवी त्रिपुरघ्नाय शिवाय कवचमिदं प्रादात् । त्रिपुरघ्नस्तु आदिनाथमयं च संवर्ताभिधमृषिं त्वां चाकथयत् । संवर्तर्षिस्तु दुर्वाससं स पुनर्दत्तात्रेयं स च लोकान् परीक्ष्य तेषु प्रचारयामासेतमिति क्रमशः लोकेऽस्मिन् प्रतिष्ठामिदं कवचमर्जयामास ।

### दशमः पटलः

दशमे पटले भुजङ्गप्रयाते छन्दसि रावणकृतं कामकलाकाल्याः स्तोत्रमुपलभ्यते । अत्रोपसंहृतौ फलश्रुतिरपि विद्यते । परमिह पुष्पिकायाम्—इति वामकेश्वरतन्त्रे कालकेयहिरण्यपुरत्रिजये रावणकृतं..........स्तोत्रराजं समाप्तमिति लिखितमस्ति । तस्माद् वामकेश्वरतन्त्रत इहैतत् संगृहीतं न तु आदिनाथोक्तमिति प्रतिभाति । एतादृशी परिस्थितिस्तु नान्यत्र कुत्रापि महाकालसंहितायां [ कामकलागुह्यकालीखण्डयोः ] विद्यते । तस्मादपवादरूपेणैतद् ग्राह्यम् । स्तोत्राभिप्रायस्तु गम्भीरार्थपरिपूर्णः ललिततरश्चेति साधकैः संप्राह्यमवश्यम् ।

प्रसन्नाकलशविधिः शक्तिसामरस्यकरविधिश्चेत्युभयोरिहाविनाभावः सम्बन्धः । अत एवोभयोरिहैकत्र निर्देशः । यथा गुरुदैवतमन्त्राणामैक्यं सिद्धं विद्यते तथैव तीर्थदैवतशक्तीनामैक्यमिह शास्त्रे प्रतिपादितम् ।

ब्राह्मणस्य तीर्थेऽधिकारो नास्ति । अत एवास्मिन् प्रसङ्गे परिशेषादेव प्रका-

बधिकारः सिद्ध्यति । द्विजपदं द्विजातिपदं चेह विप्रपरं न तु त्रैवर्णिकस्य प्रसिद्धस्य ब्राह्मणक्षत्रियवैश्यात्मकस्य वाचकमर्थतंत्रोचस्य प्रकरणानुरोधेन स्वीकारात् । तथा च पंक्तिरत्र—

द्विजातेः केवलं तीर्थे नाधिकारः प्रशस्यते । १०।८ ।
सर्वजातीर्द्विजः कुर्याद् विप्रं त्यक्त्वा तु भूमिपः । १०।२० ।

१०।१-८ ।—अयमभिसन्धिः—दशमपटले द्वे प्रकरणे मुख्यतया प्रतिपादिते स्त. । रावणकृतं देव्या भुजङ्गप्रयातस्तोत्रं प्रसन्नाकलशशक्तिसामरस्यकरविधी चेति । स्तोत्रानन्तरमेवानयोर्विध्योरुपक्रमः माहात्म्यकीर्तनं च । उभयोर्विध्योरिहैकत्रैनैव निर्देशः परस्परं संबद्धत्वात् । स्तोत्रं तन्त्रान्तरादुद्धृत्यात्र संगृहीतम् । प्रसन्नाकलशादिस्तु स्वातन्त्र्येण निर्दिष्ट इति विचार्यं पद्यसंख्यायामुभयत्र पार्थक्यं विहितम् ।

१०।६-११ ।—अनयोर्विध्योः समयनिर्देशः । कर्मस्वाभाव्यात् रात्रिरेव प्रशस्तात्र । तथैव विद्यते निर्देशोऽपि ।

१०।११-१३ ।—तीर्थपदं मदिरापरम् । तस्याश्च द्वादशविधता परिगणितेह विद्यते ।

१०।१४ ।—ब्राह्मणस्य सुरार्पणे नाधिकार इति कृत्वा तदनुकल्पोऽत्र फल-रसादिर्निर्दिष्टस्तैरिदं कर्माचरितुमर्हतीति ।

१०।१५-२११ ।—शक्तेः स्वरूपप्रकारयोरिहाभिधानम् । वर्णानुरूपतायाः शक्तिपरिग्रहे निर्देशः किन्तु प्रौढस्यार्थात् साधनाशिखरारूढस्य [ न तु वयसाऽस्य सम्बन्धः ] कृते नियमस्यास्य नास्त्यपेक्षेति स्फुटमत्र प्रतिपादितम् ।

१०।२१-२२ ।—तीर्थपात्राणां निर्धारणम्।

१०।२३-२४ ।—उक्तविध्योर्देशनिर्णय इति स्थानकालपात्रविचारेण सह स्वरूपमहिम्नावेतयोरुपपादितौ । अत्र प्रयुक्तं पशुपदमदीक्षितां व्यक्तिमवबोधयति ।

१०।२५-२७ ।—उक्तविध्योः प्राग्भवीयानां केषांचन कर्मणामिह निर्देशः ।

१०।२८-३८।—मन्त्रनिर्देशपुरस्सरं पीठस्थापनविधिरिहाभिलषितः । तथा हि गोमयोपलिप्तायां स्वस्तिकादिमांगलिकचिह्नयुतायां भूमौ धातुमद् दारवं वा पीठ-मासनं स्थापनीयम् । तत्स्थापनमन्त्रस्तु—ओं ओं ओं ह्रीं ह्रीं ह्रीं ह्रीं ह्रीं ह्रूं क्रौं ब्रूं

ग्लूं क्लप्रं ब्लूं रध्रां थ्रीं सौः च्रौं फ्रं ब्लूं ठ्रीं छ्रीं क्रीं ब्लीं क्रौं फ्लक्रौं प्रीं ख्रीं ब्लीं श्रीं फ्रूं ह्स्लह्लवडकखऐं—कसवहलक्षमओं व्रक्म्लब्लवलऊं क्लह्मव्याऊं लक्षमह्-जरक्रव्याऊं श्रीं त्रं क्ष्रूं व्रीं धं च्रं ग्लैं एह्येहि भगवति कामकलाकालि सर्वशक्ति समन्विते प्रसन्नाशक्तिभ्यां सामरस्यं कुरु कुरु मम पूजा गृह्ण गृह्ण शत्रून् हन हन मर्दय मर्दय पातय पातय राज्यं मे देहि देहि दापय दापय फ्रें फ्रें फ्रें फ्रें फ्रें फ्रें फ्रें फ्रें फ्रें छ्रीं छ्रीं छ्रीं छ्रीं छ्रीं छ्रीं छ्रीं छ्रीं छ्रीं हूं हूं हूं हूं हूं हूं हूं हूं हूं स्त्रीं स्त्रीं स्त्रीं स्त्रीं स्त्रीं स्त्रीं स्त्रीं स्त्रीं स्त्री ह्रीं ह्रीं ह्रीं ह्रीं ह्रीं ह्रीं ह्रीं ह्रीं ह्रीं फट् फट फट् नमः स्वाहा—अनेन स्थण्डिलोपरि पीठस्थापनं कर्तव्यमिति ।

१०।३८-४७ ।—पीठोपरि सिन्दूरेण यन्त्रालेखविधिः समन्त्रः कर्तव्यः । अत्र मन्त्रस्वरूपमधस्तान्निर्दिश्यते यथामति—ओं फ्रें हसखफ्रें छ्रीं फ्रों स्फ्रों···[परा] क्रीं द्रं भ्रूं क्रों फट् फट् फट् फट् फट् कामकलाकालि घोररावे विकटदंष्ट्रे कालि कापालि नररुधिरवसामांसभोजनप्रिये भगप्रिये भगाङ्कुशे भगमालिनि भगोन्मादिनि भगान्तरे इहागच्छागच्छ सन्निधिं कुरु कुरु ओं फ्रें सिद्धिकरालि ह्रीं छ्रीं हूं स्त्रीं फ्रें नमः स्वाहा क्लीं क्रीं हूं क्रों स्फ्रों कामकलाकालि स्फ्रों क्रों हूं क्रीं क्लीं स्वाहा फ्रें खफ्रें हसखफ्रें हूं स्त्रीं छ्रीं ओं ओं ओं ओं ओं फट् नमः स्वाहा ।

१०।४७-५० ।—शक्तेः वस्त्रविमोचनम् समन्त्रमिह प्रतिपादितम् । तन्मन्त्रस्तु—ओं ह्रीं सफहलक्ष्रूं फहलक्षीं ह्स्त्रीं सौः खफ्रीं रह्रीं प्रीं फ्रैं जूं फ्रौं हसखफ्रें सहफलह्रीं क्रीं ब्लूं क्षौं क्लीं श्रीं ह्रीं हसखफ्रें नमः स्वाहा ।

१०।५१-५७ ।—निर्दिष्टयन्त्रोपरि निर्वसनां शक्तिमुपवेश्य तदीयाङ्के योन्युपरि तीर्थकलशः स्थापनीयस्तत्र मन्त्रो यथा—ओं ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः ह्रीं फ्रों आं हूं स्फ्रों क्ष्रूं फ्रूं ह्रः फ्रूं घ्रां स्हें घ्रीं ह्स्त्रीं श्रीं जय जय भगवति कामकलाकालि सर्वेश्वरि इहागत्य चिरं तिष्ठ तिष्ठ यावत् पूजां करोम्यहम् फ्रें फ्रें फ्रें छ्रीं छ्रीं छ्रीं हूं हूं हूं ह्रीं ह्रीं ह्रीं स्त्रीं स्त्रीं स्त्रीं फट् फट् फट् फट् फट् स्वाहा ।

१०।५८-६० ।—श्रीगुरुशक्तिपात्रादिकानि सम्प्रदायानुसारं तीर्थपूरितानि समासाद्य हस्ताभ्यां तान्याच्छाद्य दशवारं मूलमन्त्रं कामकलाकाल्यास्त्रैलोक्याकर्षणं जपेत् पश्चाद् धेनुमुद्रयावगुण्ठनं छोटिकया ( चुटकीति प्रसिद्धया ) दिग्बन्धनं विधाय नवानां मुद्राणामिहाभिहितं प्रदर्शनम्, किन्तु चतसृणां मुद्राणामेवात्राभिधानम् । तस्मात् ग्रन्थपातः प्रतिभाति । अन्यथा कर्मणोरस्य वैफल्यं स्यादिति प्रतिपादितमत्र । किन्तु खेदोऽयमेव यत् कास्ता नवमुद्रा इति निर्णेतुं साधनं न विद्यते ।

१०।६१-६४।—एतदीयकर्माङ्गतयाष्टानां शक्तीनां पूजेह निर्दिष्टा। ताश्च शक्तयः—इच्छा, क्रिया, सिद्धिः, ऋद्धिः, स्वाहा, भीमा, करालिनी, चण्डसंकर्षिणी चेत्यष्टौ। आसामष्टसु दिक्षु भवति पूजा। मध्येऽनङ्गकुलादेव्याः पूजा कर्तव्या। अनन्तरमिह साधक इष्टदेवताया कामकलाकाल्या गुह्यकाल्या वा [ यो यस्या उपासकः स तस्याः ] पूजां करोत्विति निर्दिष्टम्।

१०।६४-७७।—तीर्थस्य [कुलद्रव्यस्य] शापविमोचनविधिः वैदिकतान्त्रिक-मन्त्राभ्यामभिलपितः। तत्र वैदिकपदं तत्सम्प्रदायपरमतः मन्त्रस्वरूपस्य पौराणिकत्वेऽपि न क्षतिः। तथा हि ते मन्त्राः—

एकमेव परं ब्रह्म स्थूलसूक्ष्ममयं ध्रुवम्।
कचोद्भवां ब्रह्महत्यां तेन ते नाशयाम्यहम्॥
सूर्यमण्डलसम्भूते वरुणालयसंभवे।
अमाबीजमये देवि शुक्रशापाद् विमुच्यताम्॥
वेदानां प्रणवो बीजं ब्रह्मानन्दमयं यदि।
तेन सत्येन ते देवि ब्रह्महत्या व्यपोहतु॥ इति वैदिकमन्त्राः।

तान्त्रिकमन्त्रस्तु—ओं हूं खफ्रें हसखफ्रें छ्रीं श्रीं क्लीं क्रं प्रीं सौः ब्लौं रजहल-क्षमऊँ ब्रकम्लब्लक्लऊँ प्रसन्ने प्रसन्नारूपिणि भगवति कामकलाकालि शुक्रदत्तं शापं मुञ्च मुञ्चापय परमानन्दसामरस्यकारिणि इदं ब्रह्मभूयावहं ब्रह्म भूयासम् स्वाहा नमः फट्—इति वारत्रयं पठनीयः। अनन्तरम्— "आं ईं ऊं ऐं औं अः ब्रह्मशाप-मोचितायै सुधादेव्यै नमः" इति मन्त्रं दश वारं जपित्वा क्लां क्लीं क्लूं क्लैं क्लौं क्लः कुलकृत्स्नं शापं मोचय मोचय अमृतं स्रावय स्रावय स्वाहा—इति मन्त्रः दशवारं जप्तव्यः। पुनश्च कामकलाकाल्या मूलमन्त्रस्य त्रैलोक्याकर्षणाभिधस्य जपः निर्दिष्टोऽत्र। यद्यप्यस्य जपे संख्योल्लेखो न विद्यते तथापि जपस्य न्यूनतमा संख्या दश भवति तदुल्लेखस्तु अव्यवहितं प्राक् सञ्जात इति तत्संख्याया दशात्मिकाया इहान्वये बाधकाभावेन दशवारमस्यापि जपः कार्यः।

१०।७८-८२।—आनन्दभैरवभैरव्योर्ध्यानम् पूजा च निर्दिष्टा। इदं च ध्यान-मविकलं गुह्यकालीखण्डस्य दशमपटलेऽपि १०६-११३ तमेषु पद्येषु विद्यते। अनयोः पूजनमन्त्रे विद्यते कश्चन भेद उभयत्र। ग्लूं इत्यनेन सुधाबीजेन वषडन्तेनानयोः पूजा कार्येति गुह्यकालीखण्डे वर्तते। ब्रच्रीं इत्यनेन गुह्यबीजेन आनन्दभैरवभैरवाभ्यां वषडन्तेन पूजानयोरिति कामकलाखण्डेऽभिलपितमस्ति।

१०।८३-८४।—इह सुधादेव्याः स्वरूपध्यानं पूजा चाभिहितास्ति। गुह्यकाली खण्डस्य दशमपटलीयानि ११३-११५ तमानि पद्यान्यविकलान्यत्रापि समुपलभ्यन्ते। पूजैकत्र सुधाबीजेन गुह्यकालीखण्डे अपरत्र कामकलाखण्डे गुह्यबीजेनेति ध्येयम्। अत्र वौषट् इति अन्ते मन्त्रपाठः। तथा चेह ब्रच्रीं सुधादेव्यै वौषडिति मन्त्र-स्वरूपम्।

१०।८५-८६।—कस्मिँश्चित्पत्रे त्रिकोणचक्रालेखः कार्यः। दलविशेष-निर्देशोऽत्र नास्ति, तस्मात्तत्सामान्यग्रहणम्। तत्र वामावर्तरीत्या दक्षिणदिश उत्तरदिशं यावत् अकारादिक्षकारान्तवर्णाः लेख्याः। मध्ये च गुह्यबीजं "ब्रच्रीं" इति वारत्रयं लेखनीयम् पुनरेकं शाकिनी बीजं "फ्रें" इति लिखित्वा तस्य (फ्रें इत्यस्य) दशवारं जपः कर्तव्य इति निर्देश इह विद्यते।

१०।८७-९३।—उपसंहारोऽत्र पटलस्य। अतएवाग्रिमपटलस्य विषयावतारः प्रमुखतो विहितः। तथा च तीर्थे अमृतरूपतां ध्यात्वा तत्रामृतीकरणमुद्राप्रयोगः कर्तव्यः। सम्मुखीकरणान्तर्गतमेतदमृतीकरणम्। तथा चोक्तं गुह्यकाली खण्डे [६।३१७-१८।]

एवंरूपा मद्भवने त्वं तिष्ठेः सर्वदैव हि।
इति या भावना शश्वदमृतीकरणं मतम्॥

पुनश्च धेनुमुद्रया वारुणं मन्त्रम् वं इत्यष्टधा जपेदितीहोक्तम्। ततः पश्चात् अमृतन्यास आचरणीयः। स चाग्रेऽनुपदमेव वक्ष्यते। प्रसङ्गादत्र परमीनामिका-मुद्राव्यवहारोऽपि कर्तव्य इति तत्स्वरूपं कथयति—वामहस्तकनिष्ठया तद्धस्ताङ्गुष्ठस्य तृतीयपर्वस्पर्श एव परमीनामिका मुद्रेति। न्यासेनानेन तीर्थस्य स्वाङ्गस्य शक्तेः घटस्य च स्पर्शः कर्तव्य इति निर्देशः। अयमेवामृतन्यासस्याभिहितो विधिः निर्वाण-न्यासे सामरस्यन्यासे चानुगच्छति। किन्तु सामरस्यन्यासे न्यसनीयानि अङ्गानि भिन्नानि भवन्ति विधिस्तुल्य एवेति ध्येयम्।

**एकादशतमः पटलः**

११।१।—अमृतन्यासोद्देशस्तन्माहात्म्यकीर्तनं च। दोषनाशः गुणाधिक्याधानं चावश्यमस्याचरणेन जायेते इति कथनमिह प्रवर्तकमत एव माहात्म्यकीर्तना-त्मकम्।

११।२-४।—अमृतन्यासस्य सप्ताङ्गानि [ऋषिश्छन्दोदेवताकीलकं शक्तिः बीजं विनियोगश्चेति] अभिहितानि।

११।४-५।—"पञ्चविंशतिपात्राणि पूर्वोक्तानि प्रकल्पयेत्" कुत्र प्राथम्येनैषां कथनमिति जिज्ञासायां गुह्यकालीखण्डस्य द्वादशतमे पटले १६३२-१६३९ पद्येषु तर्पण-क्रमेऽभिहितानि ग्राह्याणि । गुह्यकालीदेव्याः स्थाने कामकलाकाल्याः ग्रहणमस्याः स्थाने च गुह्यकाल्याः ग्रहणमिति व्यत्यासः कर्तव्यः । उभयत्र व्यत्यासे ग्रन्थभेदेन पद्धतिभेदः प्रतिपाद्यभेदः देवताभेदश्च स्वाभाविक इत्येव तत्र मूलम् । तथा हि चण्डेश्वरी, हरसिद्धा, बाभ्रवी, पिङ्गला, पूर्वाम्नायस्य देवताः । मातङ्गी, संकटा, शूलिनी मुण्डमधुमतीति दक्षिणाम्नायस्य देवताः । कुब्जिका, चामुण्डा, चण्डघण्टा, मायूरीति च पश्चिमाम्नायस्य देवताः । सिद्धिलक्ष्मीः, चण्डयोगेश्वरी, वज्रकापालिनी, कामकला-काली उत्तराम्नायस्य देवताः । भीमादेवी, हाटकेश्वरी, कालरात्रिः, महामाया, अध आम्नायस्य देवताः । महात्रिपुरसुन्दरी, कामाख्या, विश्वरूपा, मोक्षलक्ष्मीश्चेत्यूर्ध्वा-म्नायस्य देवता इति संकलनेन चतुर्विंशतिरेका च मूलदेवी गुह्यकालीति तत्र प्रति-पादितम् । एतासां देवतानां पात्राणि साधाराणि तत्र स्थापनीयानि । यतो हि काम-कलाकाल्या अयुताक्षरनाम्नि मन्त्रे एतासामुल्लेखस्तस्मादेतद्देवतापात्राण्येवेह प्रकल्प्यानीति विज्ञेयानि ।

मया कामकलाकाल्या अयुताक्षरनामनि ।
मन्त्रे मृत्युञ्जयप्राणे सर्वा एव प्रदर्शिताः ॥ गु० ख० १२।१६२७।

व्यत्यासं नैव कल्पयेदित्यस्य तु क्रमे व्यत्यासनिषेध इति तात्पर्यम् । यद्यस्य न्यासस्य प्रत्यहं चिकीर्षा तदानुकल्पस्य तत्राभिहितस्य व्यवहारः न तु प्रथमकल्पस्येति । 'एतन्न्यासे प्रात्यहिके प्रोक्तं मुक्त्वा समाचरेदि"त्यस्यार्थः ।

११।६-१९।—अमृतन्यासस्य स्वरूपाभिधानम् । तथा हि इह पञ्चविंशति-स्थानेषु न्यासः कर्तव्यः । तत्रादौ चत्वारिंशन्मिताः बीजकूटाः सर्वस्थानन्यासेषु निवेश्याः । अत एवादिन्यासमन्त्र एव केवलं तन्निर्देशः क्रियते, यस्य सर्वत्रानु वर्तनम् । एवमन्ते—"इदममृतीकृत्य परमात्मनि हुत्वा स्वयं जुषस्व स्वाहा" इत्यपि सर्वस्मिन्न्यासे योज्यम् । परिवर्तनीयमन्त्रा उभयोरुक्तयोर्मध्ये निवेश्यास्ते चाधो निर्दिश्यन्ते स्थानानि चात्रोल्लिखितानि यथाक्रमं न्यसनीयानि ।

(१) ओं ऐं ह्रीं हूं स्त्रीं श्रीं क्लीं आं क्रों क्षूं स्फ्रों हौं ब्लौं स्हक्लह्रीं फ्रों ग्लूं स्हौः हसखफ्रें फ्रें क्लूं क्षमब्लहकयह्रीं रजहलक्षमऊं हक्लह्लवडकखऐं कसवहलक्षमऔं ब्रकम्लब्लक्लऊं क्रं सौः च्रं रम्लब्रीं सफहलक्षूं प्रीं च्रौं हम्रीं ह्लीं ध्रीं लक्षमह्लजरक्र-व्यूऊं थ्रीं द्रं छ्रूं क्रौं ज्ञानात्मने शिवाय इदममृतीकृत्य परमात्मनि हुत्वा स्वयं जुषस्व स्वाहा—इति शिरसि न्यासः ।

(२)········ इच्छात्मने ईश्वराय············स्वाहा इति ललाटे ।
(३)············कृत्यात्मने शुद्ध्यै··················स्वाहा इति मुखें ।
(४) ·········धर्मात्मने विद्यायै············स्वाहा इति कण्ठे ।
(५)············वैराग्यात्मने लिङ्गाय············स्वाहा इति दक्षस्कन्धे ।
(६)···········ऐश्वर्यात्मने जीवाय···········स्वाहा इति वामस्कन्धे ।
(७)········शक्त्यात्मने आत्मने···········स्वाहा इति दक्षकफोणौ ।
(८)············कैवल्यात्मने सूक्ष्माय···········स्वाहा इति वामकफोणौ ।
(९)············उत्साहात्मने अविद्यायै········स्वाहा इति दक्षमणिबन्धे ।
(१०)···········धैर्यात्मने नियत्यै···········स्वाहा इति वाममणिबन्धे ।
(११)··· ········गुह्यात्मने कालाय···········स्वाहा इति दक्षकराङ्गुलिमूले ।
(१२)··········विवेकात्मने कलायै·······स्वाहा इति वाम कराङ्गुलिमूले ।
(१३)········ ··विकारात्मने रागाय ·····स्वाहा इति दक्षकराग्रे ।
(१४)············सुखात्मने कुलाय ·······स्वाहा इति वामकराग्रे ।
(१५)············आनन्दात्मने अमृताय········स्वाहा इति दक्षवंक्षणे ।
(१६)···········संज्ञात्मने बुद्धये···········स्वाहा इति वामवंक्षणे ।
(१७)···········पुण्यात्मने मायायै···········स्वाहा इति दक्षजानौ ।
(१८)··········क्रियात्मने मनसे······ ······स्वाहा इति वामजानौ ।
(१९)···········विकृत्यात्मने कामाय·········स्वाहा इति दक्षगुल्फे ।
(२०)···········प्रकृत्यात्मने रजसे·· ··· ·· स्वाहा इति वामगुल्फे ।
(२१)··· ·········अहङ्कारात्मने सत्त्वाय ·········स्वाहा इति दक्षपादे ।
(२२)············महदात्मने तमसे · ······ स्वाहा इति वामपादे ।
(२३)···········तन्मात्रात्मने युक्त्यै······ · स्वाहा इति दक्षपादाग्रे ।
(२४)··········लिङ्गात्मने सिद्ध्यै ···· ···स्वाहा इति वामपादाग्रे ।
(२५)··········परमात्मने सामरस्याय··········स्वाहा इति व्यापके ।

परमात्मनीति संलिख्य [ पञ्चवा]रमितीरयेदिति पंक्तौ पञ्चवारमित्यस्य स्थाने हुत्वा स्वयमिति समुचितः प्रतिभाति पाठः । तथैव गुह्यकालीखण्डे सप्तमे पटले ५१५ तमे पद्ये पाठो दृश्यते । उभयत्र अमृतन्यासस्यैकरूपत्वमेव विद्यते समासव्यास-शैल्यामुभयत्र यथावसरमस्य प्रतिपादनमिति न द्विरुक्तिदोषः ।

अत्र कामचारः, साधकः प्रतिवारमेकवारं वा मन्त्रं पठेत् । अनन्तरं प्रोक्षण्या पीयूषं सर्वेषु पात्रेषु देयम् ।

११।२१-२२।—पुनश्च वीरस्य भोगस्य शक्तेः कुलस्य गुरोर्देवतायाश्च षट् पात्राणि गृहीत्वा तेष्वपि ऊर्ध्वंनिर्दिष्टमन्त्रैरादितः षड्भिः पूजा कर्तव्या। पश्चादिह सामरस्यनिर्वाणन्यासौ यथाक्रममाचरणीयौ। गुह्यकालीखण्डस्य चतुर्दशतमे पटले ५१४-६४१ पद्येषु पवित्रारोहणकर्माङ्गतयैतौ साधु विवृतौ तत एवावगन्तव्यौ।

११।२३-२६।—कुलकुम्भपूजाविधिः। कलशे तीर्थस्य मद्यस्य पूरणम् समन्त्रं कर्तव्यम्। तन्मन्त्रस्तु—ओं फ्रें हूं हसखफ्रें ह्मखफ्रीं क्लीं ह्लीं स्हौः श्रीं ऐं ग्लूं क्रीं क्लूं फ्रीं स्हक्षम्लव्य्रऊं क्षस्हम्लव्य्रऊँ क्षह्लम्लव्य्रऊँ क्षस्हम्लव्य्रईऊँ क्षह्लंम्लव्य्रईऊँ क्षरहम्लव्य्रऊं सलहक्षचलहक्षजलहक्षजक्षत्रें स्हकहलह्रीं सक्लह्लफह्रीं सक्लह्रीं फ्लक्षह्लस्हव्य्रऊँ सक्ष्मह्लभग्लीं ग्लरक्षफ्रयक्लीं ह्लस्लहसकह्रीं रलहक्षवलस्हफ्रूं क्षक्षक्लफ्रचक्षक्षौं क्लह्लन्नमक्षरछ्रीं ह्लहलव्य्रकऊं पञ्चामृतं सुधारूपेण कुम्भेऽस्मिन् संविश संविश तिष्ठ तिष्ठ सन्निधिं कुरु कुरु सन्निधिं तिष्ठ तिष्ठ संविश संविशास्मिन् कुम्भे सुधारूपेण पञ्चामृतम् फट् फट् फट् नमः स्वाहा। अनन्तरं कालीमावाह्य पुष्पमाल्येन नागाङ्क (८६?) मण्डितं घटमाच्छाद्य तत्र घटे दशोपचारेण-[पाद्यार्घाचमनीयस्नानीयानि गन्धपुष्पधूपदीपनैवेद्यपुनराचमनीयानि चेत्यनेन]-देव्याः पूजां स्तुतिं प्रणतिं सन्धूपनं च कुर्यात्। पश्चात् योनिमुद्रां प्रदर्शयन् पञ्चविंशतिपात्रेषु मध्ये देव्याः साधारं पात्रं प्रसन्नचित्तः साधकः स्थापयेत्।

११।३०।—पात्रस्थापनस्थले च पूर्वत एव भूमौ त्रिकोणं तद्बहिश्चतुरस्रं च लेखनीयं यत्र गन्धपुष्पाक्षतैराधारशक्तिपूजनं चरेत् पुनस्तत्र साधारस्य पात्रस्य पूर्वाभिहितस्य स्थापनं कर्तव्यम्।

११।३१-३२।—मूलमन्त्रेणार्थात् प्रधानजप्यमन्त्रेण [त्रैलोक्याकर्षणेन] पात्रस्य संवीक्षणं, फ्रें फडिति मन्त्रेण तस्य क्षालनं, तेनैव मन्त्रेण ताडनं, हूं मन्त्रेणावगुण्ठनं च साधकः कुर्यात्। अवगुण्ठनपरिचयो यथा—

> शीर्षन्यस्ताञ्चला यद्वदधोवक्त्रा कुलाङ्गना।
> तिष्ठेत् तद्वत् यत्करणमवगुण्ठनमुच्यते॥
> संवीक्षणक्षालनताडनानि प्रसिद्धानि।

पश्चात् घटपूर्त्यनन्तरमवशिष्टं मद्यं घटस्य दक्षिणे भागे रक्षणीयम्।

११।३३-३७।—मद्यपूर्णं देव्याः पात्रं वामकरे निधाय तस्य संधपनं कुर्यात्। तत्र वामहस्ते पात्रग्रहणमन्त्रः—ओं ह्रीं हूं छ्रीं फ्रें फ्रीं ख्रौं ब्रीं प्रीं क्रीं इति।

तस्यं सन्धूपनमन्त्रस्तु—ओं ह्रीं फ्रें प्लूं क्लीं मोहाद्वयु पान्नाशनाय नमः [?] पुनः पात्राधारपूजनं तन्मन्त्रस्तु ख्फ्रें ह्रीं श्रीं जूं क्लीं रह्लीं रछ्रीं स्त्रीं सोऽहं कामकला-कालीदेव्यर्घपात्राधारं साधयामि नमः । अत्राभिप्रायस्तु न वैशद्यमेति । मोहाद्वयु-पान्नाशनाय नमः संविदापुरैरित्यस्य च पदद्वयस्य कोऽर्थः, का चेह संगतिरिति न ज्ञायते ।

११।३८-३९ ।—पात्रस्य पूजा पूर्ववत् गन्धपुष्पाक्षतैस्तन्मन्त्रस्तु—ख्फ्रें ह्रीं श्रीं रां रीं रूं रक्षम्लह्लकसछव्यऊं.........[वामभुक्] क्षलहक्षम्लक्लीं धर्म्याग्निसोमसूर्यान् सकलान्नम इति ।

११।४०-४३ ।—ह्रीं श्रीं यरलवशषसह धूम्रार्चिः कलां श्रीपादुकां नमः । एवं नीलरक्तकलां, कपिलाकलां, विस्फुलिङ्गिनीकलां ज्वालिनीकलां अर्चिष्मतीकलां हव्यवाहिनीकलां वाह्निनीकलां रौद्रीकलां संहारिणीकलामिति विपरिवर्त्य आदावन्ते च प्रथममन्त्र एव संयोज्याधारस्य सन्धूपनं कुर्यात् । पुनरर्घ्यपात्रस्य विधूपनं कर्तव्यम् । तन्मन्त्रस्तु—ओं ह्रीं श्रीं क्लीं क्ष्रीं क्ष्रौं इति ।

११।४४।—ह्रीं श्रीं क्लीं हूं ख्फ्रें फ्रें रछ्रीं सोऽहमम्बार्घ्यपात्रं स्थापयामि नम इति मन्त्रेण त्रिपाद्यां पात्रं स्थापयेत् ।

११।४५-४९।—साधारस्यार्घ्यपात्रस्य पूजा कर्तव्या । तत्र मन्त्रः—ह्रीं श्रीं हूं क्लीं छ्रीं फ्रें ग्लूं क्षौं क्रौं क्षलहक्षम्लब्रीं सिद्धिप्रदद्वादशकलात्मने सूर्यमण्डलायार्घ्यपात्राय नमः । ह्रीं श्रीं क्लीं हूं तपिनीकलां श्रीं पादुकां नमः । एवं तापिनीकलां भ्रामरीकलां क्लेदिनीकलां शोधिनीकलां रोधिनीकलां वारुणीकलां आकर्षणीकलां सुषुम्णाकलां वृष्टिवाहाकलां ज्येष्ठाकलां हिरण्यकाकलामिति यथाक्रमं निवेश्य सर्वत्रास्य मन्त्रस्योप-योगेनार्घ्यपात्रस्य पूजा कर्तव्या ।

११।५०-५२।—कुलकुम्भस्य वामभागे प्रथमं सिन्दूरेण मण्डलमारचनीयम् । पुनस्तं कुम्भं दक्षिणभागाद् वामभागे तस्मिन् मण्डले स्थापनीयम् । दक्षिणवाम-विभागस्तु साधकमपेक्ष्येति बोध्यम् ।

ओं ऐं ह्रीं श्रीं क्लीं फ्रें छ्रीं क्रीं हूं हसखफ्रें रफ्रीं रभ्रीं इति मन्त्रेण गन्धपुष्पा-क्षतान्यादाय कुलकुम्भपूजां कुर्यात् ।

११।५३-५४।—रक्षव्रऊँ रक्षक्रूं स्हक्षम्लव्य्रऊँ क्षस्हम्लव्य्रऊं क्षह्लम्लव्य्रऊं ह्रीं श्रीं ह्रूं स्हक्षम्लव्य्रऊं क्षस्हम्लव्य्रइं आनन्दभैरवाय वौषट् इति मन्त्रं वारत्रयं पठित्वा कुलकुम्भमुद्धरेत् ।

११।५५-६०।—अस्मिन्नेव पटले २३-२९ पद्येष्वभिहितेन मन्त्रेण शताक्षरेण सहस्राक्षरेण वा [त्रयोदशतमपटलेऽस्मिन्नेव ग्रन्थे वक्ष्यमाणेन] निःशब्दं सूक्ष्मधारया पात्राणि यथाक्रमं तीर्थेन [मद्येन] पूरयीत । अनन्तरं ओं ऐं ह्रीं श्रीं क्लीं ह्रूं फ्रें

ब्रह्माण्डखण्डसंभूत पीयूषसमतावह ।

आपूरितमहापात्र त्वमशेषरसं वहेः ॥

ग्लूं टक्षसनरम्लैं खलह्र वनगक्षरछ्रीं इति मन्त्रेण लेलिहानमुद्रया पात्रसंवेष्टनं कर्तव्यम् । अनन्तरमिह निर्दिष्टानां पञ्चानां मुद्राणां प्रदर्शनं कार्यम् । ताश्च मुद्राः स्तम्भनं चतुरस्रं मत्स्यं गोक्षुरं योनिश्चेति ।

११।६१-७०—प्रसन्नायाः पञ्च शापविमोचनमन्त्रा इह पञ्चविद्यापदेनाभिहिताः । अमी च मन्त्राः गुह्यकालीखण्डस्य दशमे पटले ८१-९५ पद्येष्वविकलं समुपलभ्यन्ते । अत्र तु चतुर्थपञ्चममन्त्रयोः त्रुटिस्तत एव पूरिता अनन्यगतिकत्वात् युक्तिसिद्धत्वात् प्रसङ्गैक्यात् तत्सङ्गतेश्च । तथा च तेषां पञ्चानां मन्त्राणां स्वरूपम्—

(क) ऐं ह्रीं श्रीं ऐं अमृते अमृतोद्भवे अमृतवर्षिणि क्लीं अमृतं स्रावय स्रावय सौः सुधे शुक्रशापं मोचय चतुरन्वयिनां सिद्धिसामर्थ्यं दह दह महाखेचरी मुद्रां प्रकटय प्रकटय हूं स्वाहा ।

(ख) ऐं ऐं ऐं ह्लां ह्लीं ह्लूं ह्लैं ह्लौं ह्लः सुधाकृत्स्नं शापं नाशय अमृतं स्रावय स्रावय स्वाहा ।

(ग) ऐं ऐं ऐं छां छीं छूं विकारशोधिनि कुलद्रव्यस्य विकारान् हर हर स्वाहा ।

(घ) ऐं ऐं ऐं ऐं अमृते अमृतोद्भवे अमृतवर्षिणि महाप्रकाशयुक्ते स्वाहा ।
गुह्यकालीखण्डस्य दशमपटले तु—

ऐं ऐं ऐं ऐं रह्रां रह्रीं रह्रैं रछ्रां रछ्रीं रछ्रूं रछ्रैं रछ्रौं अमृते अमृतोद्भवे अमृतस्वरूपे अमृतवर्षिणि महाप्रकाशयुक्ते स्वाहा इत्युपलभ्यते मन्त्रः ।

(ङ) ऐं ऐं ऐं ऐं क्लौं ह्रीं हूं क्लीं स्त्रीं तिरस्करिणि सकल जय वाग्वादिनि सकलपशुजन......इतः परमत्र त्रुटिः

गुह्यकाली खण्डे तु—

ऐं ऐं ऐं ऐं श्रीं ह्रीं हूं क्लीं स्त्रीं. फें फें खफक्ष्रूं खफक्ष्रीं फखभ्रूं फखभ्रीं फम्रग्लूं रकक्ष्रैं रकक्ष्रौं तिरस्करिणि सकलजनवाग्वादिनि सकलपशुजनवाक्चक्षुःश्रोत्र-घ्राणजिह्वावचस्तिरस्कारं कुरु कुरु फट् फट् इति । इह कामकलाखण्डे ग्रन्थपात इति परिलक्ष्यते ।

द्वादशतमः पटलः

१२।१-४।—कामकलाकाल्याः सहस्रनामस्तोत्रस्यावतरणम् । कायिकं वाचिकं मानसिकं चेति पापस्याघमंजनकस्य कर्मणस्त्रैविध्यमिह त्रिविधमहापापपदेनाभि-प्रेतम् । तदोघस्य समूहस्य नाशने क्षम एष सहस्रनामपाठ इति माहात्म्यमस्य कीर्तितम् ।

१२।४-६।—इह रूढानि गौणानि सांकेतिकानि चेति त्रिविधानि नामानि संगृहीतानि सारात्मकानि । यद्यप्यस्याः लक्षमितानि कोटिमितानि च नामानि वर्तन्ते तथापि तेभ्यः सारोऽत्र समुद्धृतः । यथा दुग्धाब्धेरमृतं संकलय्यते । यतो हि अल्पायुषां नराणां कृते देव्याः सकलनाम्नां कीर्तनमसंभवमिति ।

१२।१०-१४—सहस्रनाम्नः माहात्म्यमभिलपितमिह । अनन्तरं पञ्च पंक्तयः गद्यात्मकाः, यासु ऋष्यादीनि मन्त्राङ्गानि षट् सप्त वा [ऋषिश्छन्दः देवता बीजं शक्तिः कीलकं विनियोगश्चेति] निर्दिष्टानि ।

१२।१५-१३२।—एतेषु श्लोकेषु कामकलादेव्याः सहस्रं नामानि समुल्लिखितानि सन्ति परिगणनया साधु समुपलब्धानि च तानि ।

१२।१३३-१५७।—इहास्य सहस्रनाम्नः फलश्रुतिरभिलपिता । माहात्म्य-फलश्रुत्योरन्तरमवधातव्यम् । प्रवर्तिका तज्जन्यफलाभिधाना फलश्रुतिः स्तोत्रस्यान्ते निर्दिश्यते । महिम्नः कीर्तनं तु माहात्म्यम् स्तोत्रस्यारम्भ एव प्रतिपाद्यत इति विशेषः ।

अनन्तरमस्य प्रधानाङ्गतया निर्दिष्टं गद्यसंजीवनाभिधानं गद्यम्, यस्मिन् प्रमुखतः बीजमन्त्रजातं स्वरूपपरिचायकवाक्यजातं च सन्निविष्टमस्ति । अनेन गद्येन सम्पुटितस्य सहस्रनाम्नः पाठो विधेय इति प्रथमः कल्पः । अथ च तत्राशक्तौ सहस्रनाम्नः पाठान्ते अस्य गद्यस्य वाचनमावश्यकम् । अन्यथा सहस्रनामपाठवैफल्यं स्यादितीहाभिलपितम् । केवलस्य सहस्रनाम्नः पाठो निषिद्धः । किन्तु केवलस्य गद्यसंजीवनस्य पाठेन सहस्रनाम्नः पाठजन्यं पुण्यादि फलं लब्धुं शक्यमिति विशेषः ।

त्रयोदशतमः पटलः

त्रयोदशतमेऽस्मिन् पटले एकाक्षरमारम्य सहस्राक्षरं यावत् कामकलाकाल्याः मन्त्राणां समुद्धारो विद्यते । तादृशजिज्ञासयैव पटलस्यावतरणं संजायते ।

१३।१-४।—अवतरणभागेऽस्मिन् प्रागुक्तविषयसारं निर्दिश्य मन्त्रावबोधाय जिज्ञासा प्रकाशिता ।

१३।५-८।—प्रथमं मरीचिसमुपासिताया मन्त्र ऋष्याद्यङ्गनिर्देशपूर्वकमभिहितः । तथा च मन्त्रः— "ओं ऐं ह्लीं श्रीं क्रीं क्लीं हूं छ्रीं स्त्रीं फ्रें क्रौं ह्रौं क्षौं आं स्फ्रों स्वाहा—इत्ययं सप्तदशाक्षरः मन्त्रः

१३।८-१०।—ह्लीं फ्रें क्रों ग्लूं छ्रीं स्त्रीं हूं स्फ्रों खफ्रें ह्सफ्रीं ह्सखफ्रें क्ष्रौं स्हौः फट् स्वाहा—षोडशाक्षरोऽयं मन्त्रः कपिलोपास्यायाः ऋष्याद्यङ्गनिर्देशपुरस्सरमभिहितोऽत्र ।

१३।११-१२।—हिरण्याक्षोपासिताया नवाक्षरमन्त्रः ऋष्यादिनिर्देशपूर्वकमुक्तः । तथा च मन्त्रः—"खफ्रें रह्लीं रज्रीं रक्रीं रक्ष्रीं रछ्रीं रफ्रीं ह्सखफ्रीं फट्" इति ।

१३।१३-१४।—लवणोपास्यामन्त्रस्तु दशाक्षरः साङ्गमभिलपितः—"ह्ली खफ्रें हूं स्फ्रों क्लीं छ्रीं स्त्रीं फ्रें स्वाहा" ।

१३।१५-१६।—वैवस्वतोपास्यामन्त्रः पञ्चदशाक्षरः साङ्गमभिहितः—"हूं फट् फ्रें कामकलाकालिकायै नमः स्वाहा" ।

१३।१७-१८।—दत्तात्रेयोपास्यामन्त्रः नवाक्षरोऽङ्गादिनिर्देशपुरस्सरमभिहितः । "ओं ऐं छ्रीं फ्रें क्लीं स्त्रीं स्फ्रों हूं ह्लीं" ।

१३।१६-२०।—दुर्वाससः उपास्यायाः मन्त्रः पञ्चाक्षरः साङ्गमभिलपितः—"फ्रों स्फ्रों फ्रें ख्फ्रें स्फ्रों"

१३।२१-२३।—उत्तङ्कोपास्यायाश्चतुर्दशाक्षरो मन्त्र उक्तः—ऐं श्रीं फ्रें ख्फ्रें हसफ्रीं हसखफ्रें ह्लीं श्रीं क्लीं छ्रीं स्त्रीं हूं नमः ।

१३।२४-२५।—कौशिकोपास्यायाः सप्तदशाक्षरमन्त्र उक्तः—'क्षम्लां ह्लीं फ्रें नमः विकरालायै क्लीं ख्फ्रें स्फ्रों नमः हूं [?] स्वाहा ।"

१३।२६-२८।—और्वोपास्यायाः एकोनत्रिंशदक्षरमन्त्रः—"ह्लीं छ्रीं हूं स्त्रीं फ्रें भगवत्यै कामकलाकालिकायै ओं ऐं क्रों क्रीं श्रीं क्लीं स्फ्रों स्फ्रों फट् फट् स्वाहा ।"

१३।२६-३०।—पराशरोपासितायाः पञ्चाक्षरमन्त्रः—"छ्रीं स्फ्रों हूं क्लीं फट्"—अत्र "अस्त्रं पाराशरी" ति समुचितपाठः प्रतिभाति मातृकानुरोधात् अस्त्रपाराशरीति पाठः मूले धृतः ।

१३।३०-३२।—भगीरथोपासितायास्त्र्यक्षरमन्त्रः—"हस्लक्षकमहव्रूं स्हकह्ललह्लीं सक्लह्लकह्लीं ।

१३।३२-३४।—बल्युपास्यायाः षडक्षरमन्त्रः—"ह्लीं स्फ्रों हूं ख्फ्रें क्लीं ख्फ्रें ।

१३।३४-३६—संवर्तोपास्यायाः षोडशाक्षरमन्त्रः—"क्लीं श्रीं ह्लीं हूं छ्रीं फ्रें खफ्रें क्ष्रूं ग्लूं हूं हौं रफ्रें क्रों क्रीं ओं ऐं ।"

१३।३७-३६—नारदोपास्यायाः पञ्चदशाक्षरमन्त्रः—"ओं ऐं क्लीं स्फ्रों ह्लीं खफ्रें छ्रीं हसफ्रीं स्त्रीं हसखफ्रें हूं सफहलक्षूं फट् स्वाहा ।"

१३।३६-४३—गरुडोपास्यायाः सप्तदशाक्षरमन्त्रः—स्हजहलक्षम्लवनऊं ह्लीं सग्लक्षमहरह्लूं छीं क्वलह्लझकह्लनसक्लईं⋯⋯[कूर्मकूट] लक्षमह्लजरक्रव्यऊं⋯⋯[वधूकूट] क्लक्षसहमव्यऊं फ्रें फ्लक्षह्लस्हव्यऊं ह्लसलहसकह्लीं फट् नमः स्वाहा ।

१३।४४-४६—परशुरामोपास्यायाः सप्ताक्षरमन्त्रः—"श्रीं ह्लीं क्लीं छ्रीं स्त्रीं क्रीं फट्" ।

१३।४६-४८।—भार्गवोपास्यायाः एकादशाक्षरमन्त्रः—"ओं आं क्रों ह्रीं क्ष्रूं ग्लूं फ्रें स्त्रीं छ्रीं स्वाहा।"

१३।४९-५१।—सहस्रबाहूपासितायाश्चतुर्दशाक्षरमन्त्रः—ऐं क्रों स्फ्रों फ्रें खफ्रें हसफ्रीं हसखफ्रें फट् फट् फट् नमः स्वाहा।"

. १३।५२-५३—पृथूपासितायाः पञ्चाक्षरमन्त्रः—"क्लीं स्फ्रों स्फ्रों क्लीं फट्।"

१३।५४-५७।—हनुमदुपास्याया द्वादशाक्षरमन्त्रः—ओं आं ऐं ओं ईं ओं ह्रीं हूं श्रीं क्लीं कालि करालि विकरालि फट् फट्।"

१३।५८-६७।—कामकलाकाल्याः शताक्षरमन्त्र.—

"ह्रीं क्लीं हूं नमः कामकलाकालिकायै ऐं क्रों श्रीं क्रीं छ्रीं स्त्रीं फ्रें खफ्रें सकच नरमुण्डकुण्डलायै हसखफ्रीं हसखफ्रूं हसखफ्रें हसखफ्रैं हसखफ्रों महाविकरालवदनायै महाप्रलयसमयब्रह्माण्डनिष्पेषणकरायै रह्रीं रश्रीं रफ्रें रस्फ्रों रस्फ्रों हूं हूं हूं फट् फट् फट् भयङ्कररूपायै ह्लक्ष्म्लें लक्षों क्षरह्रीं क्षस्त्रीं रक्षश्रीं खं रभ्रें सं ठं ठं ठं फें फें नमः स्वाहा।

१३।६८-१०२।—कामकलाकाल्याः सहस्राक्षरमन्त्रोद्धारः—ओं नमो भगवत्यै कामकलाकालिकायै ओं ओं ओं ओं ओं ह्रीं ह्रीं ह्रीं ह्रीं ह्रीं श्रीं श्रीं श्रीं श्रीं श्रीं क्लीं क्लीं क्लीं क्लीं क्लीं हूं हूं हूं हूं हूं छ्रीं छ्रीं छ्रीं छ्रीं छ्रीं स्त्रीं स्त्रीं स्त्रीं स्त्रीं स्त्रीं संहार भैरवसुरतरसलोलुपायै क्रों क्रों क्रों क्रों क्रों हौं हौं हौं हौं हौं फ्रें फ्रें फ्रें फ्रें फ्रें खफ्रें खफ्रें खफ्रें खफ्रें खफ्रें क्षूं क्षूं क्षूं क्षूं क्षूं स्फ्रों स्फ्रों स्फ्रों स्फ्रों स्फ्रों स्हौः स्हौः स्हौः स्हौः स्हौः ग्लूं ग्लूं ग्लूं ग्लूं ग्लूं क्षौं क्षौं क्षौं क्षौं क्षौं फ्रों फ्रों फ्रों फ्रों फ्रों क्रीं क्रीं क्रीं क्रीं क्रीं क्रौं क्रौं क्रौं क्रौं क्रौं जूं जूं जूं जूं जूं क्लूं क्लूं क्लूं क्लूं क्लूं प्रकटविकटदशन विकरालवदनायै क्लौं क्लौं क्लौं क्लौं क्लौं ब्लौं ब्लौं ब्लौं ब्लौं ब्लौं क्ष्रूं क्ष्रूं क्ष्रूं क्ष्रूं क्ष्रूं ठ्रीं ठ्रीं ठ्रीं ठ्रीं ठ्रीं प्रीं प्रीं प्रीं प्रीं प्रीं हभ्रीं हभ्रीं हभ्रीं हभ्रीं हभ्रीं स्हें स्हें स्हें स्हें स्हें घ्रीं घ्रीं घ्रीं घ्रीं घ्रीं सृष्टिस्थितिसंहारकारिण्यै मदनातुरायै क्रैं क्रैं क्रैं क्रैं क्रैं श्रीं थ्रीं थ्रीं थ्रीं थ्रीं ढ्रीं ढ्रीं ढ्रीं ढ्रीं ढ्रीं ठौं ठौं ठौं ठौं ठौं ब्लूं ब्लूं ब्लूं ब्लूं ब्लूं भ्रूं भ्रूं भ्रूं भ्रूं भ्रूं फहलक्षां फहलक्षां फहलक्षां फहलक्षां फहलक्षां भयङ्करदंष्ट्रायुगल मुखररसनायै घ्रीं घ्रीं घ्रीं घ्रीं घ्रीं खूं खूं खूं खूं खूं क्रूं क्रूं क्रूं क्रूं क्रूं श्रीं श्रीं श्रीं श्रीं श्रीं चफलक्रों चफलक्रों चफलक्रों चफलक्रों चफलक्रों......................[सुरतपिनी] क्रूं क्रूं क्रूं क्रूं क्रूं गं गं गं गं गं ह्लूः ह्लूः ह्लूः ह्लूः ह्लूः सकचनरमुण्डकृत

[कुण्डलात्यै] कुलायै ल्यूं ल्यूं ल्यूं ल्यूं ल्यूं णूं णूं णूं णूं णूं हैं हैं हैं हैं हैं क्लौं क्लौं क्लौं क्लौं क्लौं ब्रूं ब्रूं ब्रूं ब्रूं ब्रूं स्फीः स्फीः स्फीः स्फीः स्फीः ब्जं ब्जं ब्जं ब्जं ब्जं स्हीं स्हीं स्हीं स्हीं स्हीं महाकल्पान्तब्रह्माण्डचर्वणकरायै हैं हैं हैं हैं हैं अं अं अं अं अं इं इं इं इं इं उं उं उं उं उं स्हें स्हें स्हें स्हें स्हें रां रां रां रां रां गं गं गं गं गं गां गां गां गां गां युगभेदभिन्नगुह्यकाल्येकमूर्तिधरायै फ्रें फ्रें फ्रें फ्रें फ्रें खफ्रें खफ्रें खफ्रें खफ्रें खफ्रें हसफ्रीं हसफ्रीं हसफ्रीं हसफ्रीं हसफ्रीं हसखफ्रें हसखफ्रें हसखफ्रें हसखफ्रें हसखफ्रें क्षरह्लीं क्षरह्लीं क्षरह्लीं क्षरह्लीं क्षरह्लीं ह्लक्षम्लें ह्लक्षम्लें ह्लक्षम्लें ह्लक्षम्लें ह्लक्षम्लें [जरक्रीं जरक्रीं जरक्रीं जरक्रीं जरक्रीं ?] रह्लीं रह्लीं रह्लीं रह्लीं रह्लीं रक्ष्रीं रक्ष्रीं रक्ष्रीं रक्ष्रीं रक्ष्रीं रफ्रीं रफ्रीं रफ्रीं रफ्रीं रफ्रीं क्षह्लम्लव्यूऊं क्षह्लम्लव्यूऊं क्षह्लम्लव्यूऊं क्षह्लम्लव्यूऊं क्षह्लम्लव्यूऊं शतवदनान्तरितैकवदनायै फट् फट् फट् ओं तुरु ओं मुरु ओं हिलि ओं किलि ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः महाघोररावे कालि कापालि महाकापालि विकटदंष्ट्रे शोषिणि संमोहिनि करालवदने मदनोन्मादिनि ज्वालामालिनि शिवारूपि भगमालिनि भगप्रिये भैरवीचामुण्डायोगिन्यादिशतकोटि गणपरिवृते प्रत्यक्षं परोक्षं मां द्विषतो जहि जहि नाशय नाशय त्रासय त्रासय मारय मारय उच्चाटय उच्चाटय स्तम्भय-स्तम्भय विध्वंसय विध्वंसय हन हन त्रुट त्रुट विद्रावय विद्रावय छिन्धि छिन्धि पच पच शोषय शोषय मोहय मोहय उन्मूलय उन्मूलय भस्मीकुरु भस्मीकुरु दह दह क्षोभय क्षोभय हर हर प्रहर प्रहर पातय पातय मर्दय मर्दय दम दम मथ मथ स्फोटय स्फोटय जम्भय जम्भय भ्रामय भ्रामय सर्वभूतभयङ्करि सर्वजनवशंकरि सर्वशत्रु-क्षयंकरि ओं ह्रीं ओं क्लीं ओं हूं ओं क्रों ज्वल ज्वल प्रज्वल प्रज्वल कह कह हस हस राज्यधनायुःसुखैश्वर्यं देहि देहि दापय दापय कृपाकटाक्षं मयि वितर वितर छ्रीं स्त्रीं फ्रें ह्स्रीं ठ्रीं भ्रीं थ्रीं प्रीं क्रीं क्लीं ह्रां ह्रीं ह्रूं मुण्डे सुमुण्डे चामुण्डे मुण्डमालिनि मुण्डावतंसिके मुण्डासने ग्लूं ब्लूं ज्लूं शवारूढे षोडशभुजे सोद्यते पाशपरशुनागचाप मुद्गरशिवापोतखर्परनरमुण्डाक्षमालाकर्त्रीनानाङ्कुशशवचक्रत्रिशूलकरवालधारिणि स्फुर स्फुर प्रस्फुर प्रस्फुर मम हृदि तिष्ठ तिष्ठ स्थिरा भव त्वं ऐं ओं स्वाहा स्हौः क्लीं स्फों खं खं खं खा खां खां [पदवी] ह्रीं ह्रीं ह्रीं ह्रूं ह्रूं ह्रूं जय जय जय विजय विजय फट् फट् फट् नमः स्वाहा ।

दशाक्षरत्रुटिरिह कथं पूरणीय इति जिज्ञासाशान्तिः साधकैः सुधीभिः विचार्योहेन कर्तव्या ।

पञ्चदशतमः पटलः

पञ्चदशतमे पटले कामकलाकाल्या दशसहस्राक्षरपरिमितो मन्त्र अभिहितः । एतस्य प्राणायुताक्षरीति संज्ञानिर्दिष्टेह । अस्य मन्त्रस्य स्वरूपमुद्‌पाटयितुमिह प्रयत्नो

विहितः । अत्र कानिचनापरिचितानि कूटानि अभिहितानि येषां स्वरूपमज्ञानादिहानुद्घाटितमेव विद्यते । गणनया चेह द्वात्रिंशदक्षरत्रुटिः सा कथमपनेयेति साधकैः सुधीभिश्चिन्तनीयम् । न चात्र विशेषवक्तव्यस्यापेक्षा मन्त्रात्मकत्वात् पटलस्य ।

मातृकानुरोधात् काश्चन पंक्तयः यथालिखिता एवेह मुद्रापिताः किन्तु तासु संशोधनमपेक्ष्यते यथामति तदिहोपस्थाप्यते । यथा—३५ तमपद्यस्य पूर्वार्द्धः—

१—सर्वलोकमुमे वशमानय ततो वदेदिति मुद्रापितः । अत्र सर्वलोकममुं मे वशमानय ततो वदेदिति पाठः समुचितः प्रतिभाति । तथैवार्थसङ्गतेः, अष्टमपटलेऽस्य मन्त्रस्यैतादृशस्वरूपतायाः दर्शनाच्च ।

२—५५ तमे पद्ये "काममाता" इत्यस्ति । अत्र कामो माता इति समुचितः प्रतिभाति पाठः । बीजद्वयस्य ताभ्यां संकेतितस्येह ग्रहणं यतः ।

३—८८ तमे पद्ये "प्रस्ताविमि" इति वर्तते । अर्थानुरोधं प्रक्रमं चादृत्य "प्रस्तारिणि" इति पठनीयम् ।

४—१०१ तमे पद्ये "कूटेश्वरीति" पाठः प्रामादिकः । अर्थानुसन्धानेन सम्बोधन पदमिह सङ्गतं तस्य । तस्मात् कूटेश्वरि इति पाठः समुचितः प्रतिभाति ।

५—१५३ तमे श्लोके "पुरावागीश्वरि" तथेति विद्यते । "त्रिपुरा वागीश्वरि" इति पाठस्तु सङ्गतिं भजते ।

६—१७१ तमे पद्ये पठ इत्यस्य स्थाने पच इति समुचितः प्रतिभाति पाठः ।

७—३०८ तमे पद्ये परिभारुण्डकापाला इति वर्तते अर्थसङ्गतिस्तु पविभारुण्डकापाला इति पाठे सञ्जायते ।

८—३६१ तमे पद्ये "सद्योधनपद"मिति पाठस्यार्थः सन्दिग्धोऽस्ति "सद्योधनप्रदे" इत्यस्य पाठे सति अर्थसंलग्नता भवति ।

९—४१५ तमे पद्ये "संविः" इति वर्तते सविदिति पाठः समुचितोऽत्र ।

१०—४७३ पद्येऽस्मिन् काव्यमिति पठितम् कार्यमिति पठनीयम् । तथासत्यर्थसङ्गतिर्दृश्यते ।

११—५६६ तमे पद्ये चा क्षिवितत्तो इति पठितम् चाक्षिवितते इति पाठेऽर्थस्य भवति सङ्गतिः।

कामकलाकाल्याः प्राणायुताक्षरी मन्त्रः।

ओं ऐं ह्रीं श्रीं ह्रीं क्लीं हूं छ्रीं स्त्रीं फ्रें क्रों ह्रौं क्षौ आं स्फ्रों स्वाहा कामकलाकालि, ह्रीं क्रीं ह्रीं ह्रीं ह्रीं हूं हूं ह्रीं ह्रीं ःह्रीं क्रीं क्रीं क्रीं ठः ठः दक्षिणकालिके, ऐं क्रीं ह्रीं हूं स्त्रीं फ्रें स्त्रीं छ्रीं ख्फ्रें भद्रकालि हूं हूं फट् फट् नमः स्वाहा भद्रकालि, ओं ह्रीं ह्रीं हूं हूं भगवति श्मशानकालि नरकङ्कालमालाधारिणि ह्रीं क्रीं कुणपभोजिनि फ्रें फ्रें स्वाहा श्मशानकालि, क्रीं हूं ह्रीं स्त्रीं श्रीं क्लीं फट् स्वाहा कालकालि, ओं फ्रें सिद्धिकरालि ह्रीं छ्रीं हूं स्त्रीं फ्रें नमः स्वाहा गुह्यकालि, ओं ओं हूं ह्रीं फ्रें छ्रीं स्त्रीं श्रीं क्रों नमो धनकाल्यै विकरालरूपिणि धनं देहि देहि दापय दापय क्षं क्षां क्षिं क्षीं क्षुं क्षूं क्षृं क्षॄं क्ष्लृं क्षें क्षैं क्षों क्षौं क्षः क्रों क्रोः आं ह्रीं ह्रीं हूं हूं नमो नमः फट् स्वाहा धनकालिके, ओं ऐं क्लीं ह्रीं हूं सिद्धिकाल्यै नमः सिद्धिकालि, ह्रीं चण्डाट्टहासनि जगद्ग्रसनकारिणि नरमुण्डमालिनि चण्डकालिके क्लीं श्रीं हूं फ्रें स्त्रीं छ्रीं फट् फट् स्वाहा चण्डकालिके, नमः कमलवासिन्यै स्वाहालक्ष्मि ओं श्रीं ह्रीं श्रीं कमले कमलालये प्रसीद प्रसीद श्रीं ह्रीं श्रीं महालक्ष्म्यै नमः महालक्ष्मि, ह्रीं नमो भगवति माहेश्वरि अन्नपूर्णे स्वाहा अन्नपूर्णे, ओं ह्रीं हूं उत्तिष्ठपुरुषि किं स्वपिषि भयं मे समुपस्थितं यदि शक्यमशक्यं वा क्रोधदुर्गे भगवति शमय स्वाहा हूं ह्रीं ओं, वनदुर्गे ह्रीं स्फुर स्फुर प्रस्फुर प्रस्फुर घोरघोरतरतनुरूपे चट चट प्रचट प्रचट कह कह रम रम बन्ध बन्ध घातय घातय हूं फट् विजयाघोरे, ह्रीं पद्मावति स्वाहा पद्मावति, महिषमर्दिनि स्वाहा महिषमर्दिनि, ओं दुर्गे दुर्गे रक्षिणि स्वाहा जयदुर्गे, ओं ह्रीं दुं दुर्गायै स्वाहा, ऐं ह्रीं श्रीं ओं नमो भगवति मातङ्गेश्वरि सर्वस्त्रीपुरुषवशङ्करि सर्वदुष्टमृगवशंकरि सर्वग्रहवशंकरि सर्वसत्त्ववशङ्करि सर्वजनमनोहरि सर्वमुखरञ्जिनि सर्वराजवशङ्करि सर्वलोकममुं मे वशं मानय स्वाहा, राजमातङ्गि उच्छिष्टमातङ्गिनि हूं ह्रीं ओं क्लीं स्वाहा उच्छिष्टमातङ्गि, उच्छिष्टचाण्डालिनि सुमुखि देविमहापिशाचिनि ह्रीं ठः ठः ठः उच्छिष्टचाण्डालिनि, ओं ह्लीं बगलामुखि सर्वदुष्टानां मुखं वाचं स्तम्भय जिह्वां कीलय कीलय बुद्धिं नाशय ह्लीं ओं स्वाहा बगले, ऐं श्रीं ह्रीं क्लीं धनलक्ष्मि ओं ह्रीं ऐं ह्रीं ओं सरस्वत्यै नमः सरस्वति, आं ह्रीं हूं भुवनेश्वरि, ओं ह्रीं श्रीं हूं क्लीं आं अश्वारूढायै फट् फट् स्वाहा अश्वारूढे, ओं ऐं ह्रीं नित्यक्लिन्ने मदद्रवे ऐं ह्रीं स्वाहा नित्यक्लिन्ने। स्त्रीं क्षमकलह्रहसव्यूं ............[बालाकूट].............[बगलाकूट] ............[त्वरिताकूट] जयभैरवि श्रीं ह्रीं ऐं ब्लूं ग्लौः अं आं इं राजदेवि राजलक्ष्मि

ग्लं ग्लां ग्लि ग्लीं ग्लुं ग्लूं ग्लृं ग्लॄं ग्लॢं ग्लें ग्लैं ग्लों ग्लौं ग्लः क्लीं श्रीं ध्रीं ऐं ह्रीं क्लीं
पौं राजराजेश्वरि ज्वल ज्वल शूलिनि दुष्टग्रहं ग्रस स्वाहा शूलिनि, ह्रीं महाचण्डयोगे-
श्वरि ध्रीं थ्रीं प्रीं फट् फट् फट् फट् फट् जय महाचण्डयोगेश्वरि, श्री ह्रीं क्लीं प्लूं ऐं
ह्रीं क्लीं पौं क्षीं क्लीं सिद्धिलक्ष्म्यै नमः क्लीं पौं ह्रीं ऐं राज्यसिद्धिलक्ष्मि ओं क्रः हूं आं
क्रों स्त्रीं हूं क्षौं ह्रां फट् [त्वरिताकूट] ............ [नक्षत्रकूट] ............ सकह्लम
क्षखत्रूं [ग्रहकूट]... .. ......म्नकह्लक्षरस्त्रों [काम्यकूट]... ........यम्लत्रीं [पार्श्वकूट]
......... .....[कामकूट] . ......... ग्लक्षकमह्लव्य्रऊं ह्लह्लव्य्रकऊं मफलहलहखफ्रूं
म्लव्य्रवऊं [शंखकूट]......... . म्लक्षकसहह्लूं क्षम्लब्रसहस्हक्षवलस्त्रीं रक्षलह्लमसहकब्रूं
[मत्स्यकूट]...... .....[त्रिशूलकूट ] ...... झसखग्रमऊं ह्लक्ष्मली ह्रीं ह्रीं हूं क्लीं
स्त्रीं ऐं क्रौं छ्रीं फ्रें क्रीं ग्लक्षकमह्लव्य्रऊं हूं अघोरे सिद्धिं मे देहि दापय स्वाहा अघोरे,
ओं नमश्चामुण्डे करङ्किणि करङ्कमालाधारिणि किं किं विलम्बसे भगवति, शुष्कानने खं
खं अन्त्रकरावनद्धे भो भो वल्ग वल्ग कृष्णभुजङ्गवेष्टिततनुलम्बकपाले हृष्ट हृष्ट
हट्ट हट्ट पत पत पताकाहस्ते ज्वल ज्वल ज्वालामुखि अनलनखखट्वाङ्गधारिणि
हाहा चट्ट चट्ट हूं हूं अट्टाट्टहासिनि उड्ड उड्ड वेतालमुखि अक अकि स्फुलिङ्ग-
पिङ्गलाक्षि चल चल चालय चालय करङ्कमालिनि नमोऽस्तु ते स्वाहा विश्वलक्ष्मि,
ओं ह्रीं क्ष्रीं द्रीं शीं क्रीं हूं फट् यन्त्रप्रमथिनि ख्फ्रें ल्रीं ज्रों क्रीं ओं ह्रीं फ्रें चण्डयोगे-
श्वरि कालि फ्रें नमः चण्डयोगेश्वरि, ह्रीं हूं फट् महाचण्डभैरवि ह्रीं हूं फट् स्वाहा
महाचण्डभैरवि, ऐं ह्रीं क्लीं फ्रें ऐं ह्रीं श्रीं त्रैलोक्यविजयायै नमः स्वाहा त्रैलोक्य-
विजये, ऐं ह्रीं श्रीं क्लीं ह्रौं जयलक्ष्मि युद्धे मे विजयं देहि ह्रौं आं क्रों फट् फट् फट्
स्वाहा जय लक्ष्मि।.........[अतिचण्ड बीज] महा प्रचण्ड भैरवि हूं फ्रों ? [टकारयुक्त
अतिचण्ड बीज] फटं हूम्लव्रीं बफटं ब्रकम्लब्लवलऊं रफटं महामन्त्रेश्वरि,
ओं ह्रीं श्रीं क्लीं ह्रौं हूं वज्रप्रस्तारिणि ठः ठः वज्रप्रस्तारिणि, ओं ह्रीं नमः
परमभीषणे हूं हूं नरकङ्कालमालिनि फ्रें फ्रें कात्यायनि व्याघ्रचर्मावृतकटि क्रीं क्रीं
श्मशानचारिणि नृत्य नृत्य गाय गाय हस हस हूं हूं कारनादिनि क्रों क्रों शववाहिनि .
मां रक्ष रक्ष फट् फट् हूं हूं नमः स्वाहा कात्यायनि, ऐं ह्रीं श्रीं पैं सैं फैं रैं स्हौः पां
मीं थूं ह्रां [?] ह्रीं हूं [योगिनी कूट]........ हसखफ्रें... .... शिवशक्तिसमरसचण्ड-
कापालेश्वरि हूं नमश्चण्डकापालेश्वरि, ऐं क्रीं क्ष्मीं पौं सखक्लक्ष्मध्रयव्ली क्लीं श्रीं
ध्रीं क्लीं श्रीं ध्रीं महासुवर्णकूटेश्वरि कमलक्षसहह्ल्लूं श्रीं ह्रीं ऐं नमः स्वाहा
सुवर्णकूटेश्वरि ऐं ह्रीं श्रीं आं ग्लीं ईं आं थं नमो भगवति वार्तालि वार्तालि वाराहि
वाराहि वराहमुखि ऐं ग्लूं अन्धे अन्धिनि नमः रुन्धे रुन्धिनि नमः जम्भे जम्भिनि नमः
मोहे मोहिनि नमः स्तम्भे स्तम्भिनि नमः सर्वदुष्टे प्रदुष्टानां सर्ववाक् चित्तचक्षुःश्रोत्र

मुखगतिजिह्वास्तम्भं कुरु कुरु शीघ्रं वशं कुरु कुरु ऐं क्लीं श्रीं ठः ठः ठः ठः ठः ओं ऐं हूं फट् ठः ठः ओं ग्लुं ह्लीं वार्तालि वाराहि ह्लीं ग्लुं ओं चण्डवार्तालि ऐं ह्लीं श्रीं आं ग्लूं इं वार्तालि वार्तालि वाराहि वाराहि शत्रून् दह दह ग्रस ग्रस इं आं ग्लुं हुं फट् जय वार्तालि ऐं ह्लीं श्रीं [महाबीज]………स्हौः ओं ह्रीं हूं फ्रें राज्यप्रदे ख्फ्रें हसख्फ्रें उग्रचण्डे रणमर्दिनि हूं फ्रें छ्रीं स्त्रीं सदा रक्ष रक्ष त्वं रूपं मां रूपं च जूं सः मृत्युहरे नमः स्वाहा, अः उग्रचण्डे ऐं [योगिनीकूट]…………हसखफ्रें हसखफ्रीं ओं ह्रीं हसफ्रें हूं फ्रें उग्रचण्डे [चण्डेश्वर महाप्रेत बीजे]… …स्वाहा श्मशानोग्रचण्डे ऐं ऐं ऐं ऐं ऐं हसखफ्रीं [अमृतकूट]……खफ्रीं हसखफ्रीं रुद्रचण्डायै रह्लीं नमः स्वाहा रुद्रचण्डे। ऐं ऐं ऐं ऐं ऐं [ फेत्कारी कूट वामनेत्र विभूषित ] चण्डकूटे ख्फ्रें ग्लक्षकमह्ल्व्य्रीं प्रचण्डायै नमः स्वाहा प्रचण्डे, ऐं ऐं ऐं ऐं ऐं हसखफ्रें ह्रीं [सन्धिकूट]………चण्डनायिकायै नमः त्रूं नमः स्वाहा चण्डनायिके, ऐं ऐं ऐं ऐं ऐं हसखफ्रें हसखफ्रूं [चण्डेश्वरकूट ईकार बिन्दु युक्त महाप्रेत बीज]………क्लीं नमः स्वाहा चण्डे महादेवि, ऐं ऐं ऐं ऐं ऐं हसखफ्रीं चण्डवत्यै क्ष्म्लूं नमः स्वाहा चण्डवति, ऐं ऐं ऐं ऐं ऐं हसखफ्रें क्षम्लकस्हरयब्रूं………ख्फ्रीं [अतिप्रेत] अतिचण्डायै नमः ग्लूं नमः स्वाहा अतिचण्डे, ऐं ऐं ऐं ऐं ऐं हसखफ्रें………[श्मशान कूट] ख्फ्रीं [महाप्रेत] चण्डिकायै द्रैं नमः स्वाहा चण्डिके, ऐं ऐं ऐं ऐं ऐं हसखफ्रें, स्हफ्रीं क्लीं हूं………क्लह्रीं कात्यायन्यै ख्फ्रें कामदायिन्यै हूं नमः स्वाहा ज्वालाकात्यायनि, ऐं ऐं ऐं ऐं ऐं क्लीं हूं श्रीं ह्स्रीं महिषमर्दिनि श्रीं ऐं ऐं ऐं ऐं ऐं उन्मत्तमहिषमर्दिनि ऐं ऐं ऐं ऐं ऐं [नक्षत्रकूट शंखकूट] महामहेश्वरि तुम्बुरेश्वरि स्वाहा तुम्बुरेश्वरि, ओं ह्रीं क्लीं हूं ग्लूं आं ऐं हूं स्हौः फ्रें चैतन्यभैरवि फ्रें फ्रें स्हौः क्रों आं ऐं ग्लूं हूं क्लीं ह्रीं ओं फट् ठः ठः चैतन्य भैरवि, ऐं ऐं ऐं ऐं ऐं मुण्डमधुमत्यै शक्ति भूतिन्यै ह्लीं ह्लीं ह्लीं फट् मधुमति। वदवद वाग्वादिनि स्हौः क्लिन्नक्लेदिनि महाक्षोभं कुरु स्हौः वाग्वादिनि, भैरवि ह्रीं फ्रें ख्फ्रें क्लीं पूर्णेश्वरि सर्वकामान् पूरय ओं फट् स्वाहा पूर्णेश्वरि, ऐं ऐं ऐं ऐं ऐं रक्तरक्ते महारक्त चामुण्डेश्वरि अवतर अवतर स्वाहा रक्तचामुण्डेश्वरि माहेशि, ओं ह्रीं श्रीं त्रिपुरावागीश्वर्यै नमः त्रिपुरावागीश्वरि, हसें [मारकूट]… …[ महाप्रेत बीज ]………… कालभैरवि [निशाकूट कूर्चकूट तुङ्गप्रतुङ्गकूट]……………… चण्डवारुणि, ओं अघोरे हा हा घोरे घोरघोरतरे हूं सर्वशर्वशर्वे ल्हें नमस्ते रुद्ररूपे हः हः ओं घोरे, ह्रीं श्रीं क्रों क्लूं ऐं क्रौं छ्रीं फ्रें क्रीं ख्फ्रें हूं अघोरे सिद्धिं मे देहि दापय स्वाहा क्ष्रूं अघोरे, ओं ह्रीं फ्रें हूं महादिग्वीरे [महादिगम्बरि] ऐं श्रीं क्लीं आं मुक्तकेशि चण्डाट्टहासिनि छ्रीं स्त्रीं क्रीं ग्लौं मुण्डमालिनि ओं स्वाहा दिगम्बरि। श्रीं ऐं ह्रीं कामकलाकालेश्वरि सर्वमुखस्तम्भिनि सर्वजनमनोहरि सर्वजन

वशङ्करि सर्वदुष्टनिमर्दिनि सर्वस्त्रीपुरुषाकर्षिणि छिन्धि शृङ्खला त्रोटय त्रोटय सर्वशत्रून् जम्भय जम्भय द्विषान् निर्दलय निर्दलय सर्वान् स्तम्भय स्तम्भय मोहनास्त्रेण द्वेषिणः उच्चाटय, उच्चाटय सर्ववश्यं कुरु कुरु स्वाहा देहि देहि सर्वं कालरात्र्यै कामिन्यै गणेश्वर्य्यै नमः कालरात्रि, [ओं ऐं आं ईं णं ईं ऐह्येहि भगवति किरातेश्वरि विपिन-कुसुमावतंसिनिकर्णे भुजगनिर्मोककञ्चुकिनि ह्रीं ह्रीं हं ह्रं कह कह ज्वल ज्वल प्रज्वल प्रज्वल सर्वसिद्धि दद दददेहि देहि दापय दापय सर्वशत्रून् दह दह बन्ध बन्ध पठ पठ [ पच पच ] मथ मथ विध्वंसय विध्वंसय हूं हूं हूं फट् नमः स्वाहा· किरातेश्वरि, ऐं ऐं ऐं ऐं ऐं वज्रकुब्जिके हसखफ्रीं प्राणेशि त्रैलोक्याकर्षिणि ह्रीं क्लीं अङ्गद्राविणि स्मराङ्गने अनघे महाक्षोभकारिणि ऐं क्लीं ग्लौः ग्लं ग्लां ग्लिं ग्लीं ग्लुं ग्लूं ग्लृं ग्लॄं ग्लॢं ग्लें ग्लैं ग्लों ग्लौं ग्लः ग्लोः ग्लौं वज्रकुब्जिके, नमो भगवति घोरे महेश्वरि हसखफ्रीं देवि श्रीकुब्जिके रह्रीं स्प्रीं स्प्रूं ङञणनम अघोरामुखि छां छीं छूं. किलि किलि विच्चे पादुकां पूजयामि नमः समयकुब्जिके, ओं ऐं ह्रीं क्लीं फ्रें हसफ्रीं हसखफ्रें क्षह्म्ल्व्यूं भगवति विच्चे घोरे हसखफ्रें ऐं श्री कुब्जिके, रह्रीं रह्रूं स्ह्रौं ङञणनम अघोरामुखि छां छीं छूं किलि किलि विच्चे स्त्रीं हूं स्हौः पादुकां पूजयामि नमः स्वाहा, मोक्षकुब्जिके नमो भगवति सिद्धे महेशानि हसफ्रां हसफ्रीं हसफ्रूं कुब्जिके रह्रां रह्रीं रह्रूं खगे ऐं अघोरे अघोरामुखि किलि किलि विच्चे पादुकां पूजयामि नमः भोगकुब्जिके, ऐं ह्रीं श्रीं हसखफ्रें श्यों श्यां ? भगवत्यम्ब [प्राभातिककूट सकारादि युक्त प्राभातिककूट]...... कुब्जिकायै हसकलक्रीं यां ग्लौं टां......... ऐं क्रूं ङञणनम अघोरामुखि छां छीं छूं किलि किलि विच्चे श्रां श्रौं हसखफ्रें श्री ह्रीं ऐं जयकुब्जिके ऐं ह्रीं श्रीं सहसखफ्रीं स्हौं भगवत्यम्ब [प्राभातिककूट सकारादियुक्त प्राभातिककूट ईकारयुक्त] कुब्जिके [बालाकूट]............[ईकारयुक्त बालाकूट].........[बालाकूट ऊकारयुक्त] ङञणनम अघोरामुखि छां छीं किलि किलि विच्चे फट् स्वाहा हूं फट् स्वाहा नमः ऐं ऐं ऐं सिद्धिकुब्जिके, ऐं ह्रीं श्रीं हसखफ्रीं स्हौः म्लक्षकसहह्रूं सम्लक्षक सहह्रूं सह्रफ्रीं ?............[षष्ठ स्वर विहीनं तु कलाबीजेन भूषितम् । एतद्बीजं समाभाष्य] कुब्जिके ह्रीं ह्रीं आगच्छ आगच्छ आवेशय आवेशय वेधय वेधय ह्रीं ह्रीं सम्लक्षकसहह्रूं म्लक्षकसहह्रूं नमः स्वाहा आवेशकुब्जिके [महेन्द्रकूट]......... हसखफ्रें [पित्सकूट].........[मार्जार मणि ऋषि सारङ्ग कूटानि] ऐं ऐं ऐं ऐं ऐं कालि कालि महाकालि मांसशोणितभोजिनि ह्रां ह्रीं ह्रूं रक्तकृष्णमुखि देवि मा मां पश्यन्तु शत्रवः श्री हृदयशिवदूति श्री पादुकां पूजयामि ह्रां हृदयाय नमः हृदय शिवदूति, ऐं ऐं ऐं ऐं ऐं नमो भगवति दुष्टचाण्डालिनि रुधिर-मांसभक्षिणि कपालखट्वाङ्गधारिणि हन हन दह दह पच पच मम शत्रून् ग्रस ग्रस

मारय मारय हूं हूं हूं फट् स्वाहा शिरः शिवदूति श्रीपादुकां पूजयामि ह्रीं शिरसे स्वाहा शिरःशिवदूति, ऐं ऐं ऐं ऐं ऐं हसखफ्रां हसखफ्रीं हसखफ्रूं महापिङ्गलजटाभारे विकटरसनाकराले सर्वसिद्धिं देहि देहिं दापय दापय शिखाशिवदूति श्री पादुकां पूजयामि हूं शिखायै वषट् शिखाशिवदूति, ऐं ऐं ऐं ऐं ऐं महाश्मशानवासिनि घोराट्टहासिनि विकटतुङ्गकोकामुखि ह्रीं क्लीं श्रीं महापातालतुलितोदरि भूतवेताल सहचारिणि अनघे कवचशिवदूति श्रीपादुकां पूजयामि कवचाय हूं कवचशिवदूति, ऐं ऐं ऐं ऐं ऐं लेलिहानरसनाभयानके विस्रस्तचिकुरभारभासुरे चामुण्डाभैरवीडाकिनी-गणपरिवृते फ्रें ख्फ्रें हूं आगच्छ आगच्छ सान्निध्यं कल्पय कल्पय त्रैलोक्यडामरे महा-पिशाचिनि नेत्रशिवदूति श्रीपादुकां पूजयामि नेत्रत्रयाय वौषट् नेत्रशिवदूति। ऐं ऐं ऐं ऐं ऐं गुह्यातिगुह्यकुब्जिके हूं हूं हूं फट् मम सर्वोपद्रवान् मन्त्रतन्त्रईलि[ति] यन्त्र चूर्णप्रयोगादि कान् परकृतान् करिष्यन्ति तान् सर्वान् हन हन मथ मथ मर्दय मर्दय दंष्ट्राकरालि फ्रें हूं फट् गुह्यातिगुह्यकुब्जिके अस्त्रशिवदूति श्रीपादुकां पूजयामि अस्त्राय फट् अस्त्र शिवदूति, ऐं ऐं ऐं ऐं ऐं हूं हूं हूं हूं हूंकारघोरनादविद्राविद्राविजगत्त्रये ह्रीं ह्रीं ह्रीं प्रसारितायुतभुजे महावेगप्रधाविते क्लीं क्लीं क्लीं पदविन्यासत्रासितसकलपाताले श्रीं श्रीं श्रीं व्यापकशिवदूति जितेन्द्रिये परमशिवपर्यङ्कशायिनि छ्रीं छ्रीं छ्रीं गलदरुधिरमुण्डमाला-धारिणि घोरघोरतररूपिणि फ्रें फ्रें फ्रें ज्वालामालि पिङ्गजटाजूटे अचिन्त्यमहिमबल प्रभावे स्त्रीं स्त्रीं स्त्रीं दैत्यदानवनिकृन्तनि सकलसुरासुरकार्यसाधिके ओं ओं ओं फट् नमः स्वाहा व्यापकशिवदूति, ओं ह्रीं श्रीं क्लीं ऐं क्रों ह्रीं आं हूं········ [महापुरुष] ह्रौं ग्लूं क्रौं हसखफ्रें फ्रों क्रूं छ्रीं फ्रें क्लौं ब्लौं क्लूं स्हौः स्फ्रें ख्रौं जूं ध्रीं कालसंकर्षिणि हूं हूं स्वाहा कालसंकर्षिणि, ऐं ह्रीं श्रीं क्लीं हसखफ्रें हूं हूं कुक्कुटि क्रीं आं क्रों फ्रें फ्रों फट् फट् स्वाहा कुक्कुटि, ओं ह्रीं क्लीं स्त्रीं फ्रें भ्रमराम्बिके शत्रुमर्दिनि आं क्रों ह्रौं हूं छ्रीं फट् फट् नमः स्वाहा ओं भ्रमराम्बिके, फ्रों धनदे ह्रीं सां सीं सूं संकटादेवि संकटेभ्यो मां तारय तारय श्रीं क्लीं ह्रौं हूं आं फट् स्वाहा संकटा-देवि, ओं क्रों ह्रौं भोगवति ओं ह्रीं यं रं लं वं शं षं सं हं क्षं षं सं हं क्षं षः सः हः क्षः हूं नमोः भगवति महार्णवेश्वरि त्रैलोक्यप्रसनशीले क्षां ईं ऊं फट् स्वाहा महार्णवेश्वरि, आं क्षीं पीं चूं भगवति घूं जूं [प्रभातकूट]····· ········ ···म्लक्षक सहह्लूं चण्डक्षक्कारकापालिनि जयकङ्केश्वरि ठः ठः जयकङ्केश्वरि, ओं ह्रीं आं शबरेश्वर्यै नमः शबरेश्वरि। ओं ऐं आं ह्रीं श्रीं क्लीं हूं फ्रें ख्फ्रें हसखफ्रें पिङ्गले पिङ्गले महापिङ्गले क्रीं हूं फ्रें छ्रीं स्हौः क्रीं क्रों फ्रें स्त्रीं श्रीं फ्रों······ब्लौं ध्रीं ठः ठः सिद्धिलक्ष्मि ओं ऐं ह्रीं क्लीं भगवति महामोहिनि ब्रह्मविष्णु शिवादिसकलसुरासुर मोहिनिसकलं जनं मोहय मोहय वशीकुरु वशीकुरु कामाङ्गद्राविणि कामाङ्कुशे स्त्रीं स्त्रीं स्त्रीं क्लीं श्रीं ह्रीं ऐं

औं महामोहिनि, ऐं क्लीं यं क्ष्लीं हुं ह्रां हिं ह्रीं हुं हूं हें हैं ह्लूं हें हैं ह्रों ह्रौं हः ह्लीं हसकहलह्रीं सकलह्रीं त्रिपुरसुन्दरि हूं नमो मूकाम्बिकायै वादिनो मूकय मूकय आं क्लीं ह्रीं स्हैं स्हः सौः स्वाहा मूकाम्बिके, ह्रीं क्रों हूं फट् एकजटे ह्रीं क्रीं हूं नीलसरस्वति ओं ह्रीं क्रों वीं फट् उग्रतारे ओं श्रीं ह्रीं ऐं वज्रवैरोचनीये वीं वीं फट् ठः ठः छिन्नमस्ते ओं नमो भगवत्यै पीताम्बरायै ह्लीं ह्लीं सुमुखि बगले विश्वं मे वशं कुरु कुरु ठः ठः वश्य-वगले हूं रक्ष त्रिकण्टकि ओं क्रों क्लीं श्रीं क्रः आं स्त्रीं हूं जयदुर्गे रक्ष रक्ष स्वाहा संग्रामजयदुर्गे ह्रीं क्लीं हूं विजयप्रदे ओं ऐं ह्रीं ग्लूं क्रौं श्रीं फट् ब्रह्माणि, ओं ह्रौं ग्लूं आं ह्रीं श्रीं वीं माहेश्वरि श्रीं ब्लौं क्लौं फ्रें ब्लूं क्रीं फ्रों जूं ग्लूं स्हौः हूं हूं फट् फट् स्वाहा माहेश्वरि, ह्रीं ऐं क्लीं औं कौमारि मयूरवाहिनि शक्तिहस्ते हूं फ्रें स्त्रीं फट् फट् स्वाहा कौमारि। ओं नमो नारायण्यै जगत्स्थितिकारिण्यै क्लीं क्लीं क्लीं श्रीं श्रीं श्रीं आं जूं ठः ठः वैष्णवि। ओं नमो भगवत्यै वराहरूपिण्यै चतुर्दशभुवनाधिपायै भूपतित्वं मे देहि दापय स्वाहा वाराहि, ओं आं क्रों हूं जूं ह्रीं क्लीं स्त्रीं क्ष्लूं क्ष्रौं फ्रों जूं फ्रें जिह्वासटाघोररूपे दंष्ट्राकराले नारसिंहि ह्रौं ह्रौं ह्रौं हूं हूं हूं फट् फट् स्वाहा नारसिंहि, ओं क्लीं श्रीं हूं इन्द्राणि ह्रीं ह्रीं जय जय क्षौं क्षौं फट् फट् स्वाहा इन्द्राणि, ओं क्रों क्रीं फ्रें फ्रों छ्रीं ध्यौं णीं हसखफ्रें ब्लौं जूं क्लूं ह्रीं श्रीं क्ष्लूं क्रौं चामुण्डे ज्वल ज्वल हिलि हिलि किलि किलि मम शत्रून् त्रासय त्रासय मारय मारय हन हन पच पच भक्षय भक्षय क्रीं क्रीं ह्रीं ह्रीं हूं हूं फट् फट् ठः ठः चामुण्डे ओं नमः कामेश्वरि कामाङ्कुशे कामप्रदायिके भगवति नीलपताके भगान्तिके महेश्वरि क्जूं नमोऽस्तु ते परमगुह्ये वीं वीं वीं हूं हूं हूं मदने मदनान्तदेहे त्रैलोक्यमावेशय हूं फट् स्वाहा नीलपताके, क्रीं क्रीं हूं हूं हूं हूं क्रों क्रों क्रों श्रीं श्रीं ह्रीं ह्रीं छ्रीं फ्रें स्त्री चण्डघण्टे शत्रून् स्तम्भय स्तम्भय मारय मारय हूं फट् स्वाहा चण्डघण्टे। २६६ पद्यार्थः द्विरुक्ति भजत इति विचारणीयम्। .......................................

ओं ह्रीं श्रीं हूं क्रों क्रीं स्त्रीं क्लीं स्हजहलक्षम्लवनऊं [उमाकूट] ......... लक्षमहजरक्रब्यऊं हस्लक्षकमहव्रूं म्लकहक्षरस्त्रे चण्डेश्वरि ध्रौं छ्रीं फ्रें क्रौं हूं हूं फट् फट् स्वाहा चण्डेश्वरि, ओं ऐं आं ह्रीं हूं क्रों क्षौं क्रीं क्रों फ्रें अनङ्गमाले स्त्रियमाकर्षयाकर्षय त्रुट त्रुट छेदय छेदय हूं हूं फट् फट् स्वाहा अनङ्गमाले, ओं ऐं ह्रीं श्रीं क्लीं क्रीं आं क्रों फ्रों हूं क्ष्लूं हसखफ्रें फ्रें हरसिद्धे सर्वसिद्धिं कुरु कुरु देहि देहि दापय दापय हूं हूं हूं फट् फट् स्वाहा हरसिद्धे, ओं क्रों क्रौं हसखफ्रें हूं छ्रीं फेत्कारि दद दद देहि देहि दापय दापय स्वाहा फेत्कारि ऐं श्रीं आं ह्रीं हूं स्फ्रों स्हौः फ्रें छ्रीं स्त्रीं द्रीं ध्रीं प्रीं थ्रीं क्रां ओं लवणेश्वरि क्रः छ्रीं हूं स्त्रीं फ्रें नाकुलि ओं ऐं आं हूं ह्रीं श्रीं हूं क्लीं जूं मृत्यु-हारिणि ओं ऐं ह्रीं हूं नमो भगवति रुद्रवाराहि खड्गतुण्डप्रहारे क्रूं क्रूं क्रां क्रां

सर्वोत्पातान् प्रशमय प्रशमय क्लीं श्रीं छ्रीं स्त्रीं फ्रें नमः स्वाहा वज्रवाराहि, ओं ह्रीं क्लीं क्रों हं हं हं हयग्रीवेश्वरि चतुर्वेदमयि फ्रें छ्रीं स्त्रीं हूं सर्वविद्यानां मय्यधिष्ठानं कुरु कुरु स्वाहा हयग्रीवेश्वरि, ओं ऐं आं ह्रीं स्हः परमहंसेश्वरि कैवल्यं साधय स्वाहा परमहंसेश्वरि, ओं ह्रीं श्रीं श्रीं श्रीं क्लीं क्लीं निर्विकारस्थचिदानन्दघनरूपायै मोक्षलक्ष्म्यै अमितानन्तशक्तितत्त्वायै क्लीं क्लीं श्रीं श्रीं श्रीं ह्रीं ओं मोक्षलक्ष्मि ओं क्रीं नमो ब्रह्मवादिन्यै क्रीं ओं नमः स्वाहा, ह्रीं क्लीं हूं फ्रें शातकर्णि महाघोररूपिणि ओं श्रीं छ्रीं स्त्रीं फट् फट् स्वाहा शातकर्णि, ओं ओं ज्वल ज्वल प्रज्वल प्रज्वल महेश्वरि सर्वमुखरूपे जातवेदसि ब्रह्मास्त्रेण नाशय सचराचरं जगत् स्वाहा जातवेदसि, ओं आं ऐं क्रों क्रीं श्रीं क्लीं हूं फ्रें महानीले प्रलयाटोपघोरनादघुर्घुरे आत्मानमुपशमय जूं सः स्वाहा महानीले, ओं क्लीं क्रां क्लीं ब्रह्मविद्ये जगद्ग्रसनशीले महाविद्ये ह्रीं हूं ह्रीं विष्णुमाये क्षोभय क्षोभय क्लीं क्रों आं स्हीं शिवे सर्वास्त्राणि ग्रस ग्रस हूं फट्ः ओं स्हीं बगलामुखि सर्वशत्रून् स्तम्भय स्तम्भय ब्रह्मशिरसे ब्रह्मास्त्राय हूं क्लीं स्हीं ओं नमः स्वाहा विष्णुमाये, ओं ह्रीं फ्रें क्फ्रें श्रीं क्लीं हूं छ्रीं स्त्रीं गुह्येश्वरि महागुह्यविद्या-सम्प्रदायबोधिके आं क्रों ग्लूं फट् कृष्णलोहिततनूदरि हौं हां हीं फट् नमः ठः ठः गुह्येश्वरि, ओं नमो श्वेतपुण्डरीकासनायै प्रतिसमयविजयप्रदायै भगवत्यै अपरा-जितायै क्रः श्रीं क्लीं फट् स्वाहा ओं अपराजिते, ओं ह्रीं हुं ह्रां महाविद्ये मोहय विश्वकर्मकम् ऐं श्रीं क्लीं त्रैलोक्यमावेशय हूं फट् फट् महाविद्ये, ऐं स्हौः क्फ्रें डलखल हक्षखमव्यूं एह्येहि भगवति वाभ्रवि महाप्रलयताण्डवकारिणि गगनग्रासिनि श्रीं हूं छ्रीं स्त्रीं फ्रें शत्रून् हन हन सर्वैश्वर्यं दद दद महोत्पातान् विध्वंसय विध्वंसय सर्वरोगान् नाशय नाशय ओं श्रीं क्लीं ह्रौं आं महाकृत्याभिचारग्रहदोषान् निवारय निवारय मथ मथ क्रों जूं ग्लूं हसखफ्रीं क्फ्रें स्वाहा वाभ्रवि, ओं ह्रीं श्रीं हूं भगवति महाडामरि डमरुहस्ते नीलपीतमुखि जीवब्रह्मगलनिष्पेषिणि, छ्रीं स्त्रीं फ्रें क्फ्रें महाश्मशानरङ्गचर्चरी गायिके तुरु तुरु मर्द मर्द मर्दय मर्दय हसक्फ्रें स्वाहा डामरि, ओं ह्रीं फ्रें वेतालमुखि चर्चिके हूं छ्रीं स्त्रीं ज्वालामालि विस्फुलिङ्गरमणि महाकापालिनि कात्यायनि श्रीं क्लीं क्फ्रें कह कह धम धम ग्रस ग्रस आं क्रों ह्रौं नरमांसरुधिरपरिपूरितकपाले ग्लूं क्लौं ब्लूं णीं णी णीं फट् फट् स्वाहा चर्चिके, ह्रीं ह्रीं महामङ्गले महामंगलदायिनि अभये भयहारिणि स्वाहा अभये, ओं ऐं क्रैं ह्रौं स्हौः उत्तानपादे एकवीरे हस हस गाय गाय नृत्य नृत्य रक्ष रक्ष क्षूं फ्रों जूं ब्रीं क्लूं पाशघण्टामुण्डखट्वाङ्गधारिणि फट् फट् नमः ठः ठः एकवीरे, ओं ह्रीं हूं ऐं श्रीं क्लीं आं क्रों ह्रौं भगवति महाघोरकरालिनि तामसि महाप्रलयताण्डविनि चर्चरीकरतालिके जय जय जननि जम्भ जम्भ महाकालि आवेशिन्यै फट् स्वाहा आवेशिनि, ओं ह्रीं श्रीं क्लीं छ्रीं स्त्रीं क्फ्रें हूं फट् करालिनि मायूरशिखिपिच्छिकाहस्ते सब्रो धनं क्फ्रें क्लौं पां स्त्रीं ऋक्षकर्णि जालन्धरि मा मां

द्विषन्तु शत्रवः नन्दयन्तु भूपतयो भयं मोचय हूं फट् स्वाहा मायूरि, ओं ऐं ग्लूं क्रों इन्द्राक्षि हूं हूं हूं फट् फट् फट् स्वाहा इन्द्राक्षि, क्रीं क्रों क्रूं क्रां ह्रीं फ्रों घोणकि घोणकिमुखि तुभ्यं नमः स्वाहा घोणकि, ऐं ह्रीं श्रीं हूं क्लीं फ्रें छ्रीं फ्रें हसखफ्रें भीमादेवि भीमनादे भीमकरालि क्ष्रूं हसखफ्रीं फ्रों श्रीं सिद्धेश्वरि सहकह्लीं स्हकह्लह्रीं सक्लह्लकह्रीं महाघोरघोरतरे भगवति भयहारिणि मां द्विषतो निर्मूलय निर्मूलय विद्रावय विद्रावय उत्सादय उत्सादय महाराज्यलक्ष्मीं वितरय वितरय देहि देहि दापय दापय ख्फ्रें हसख्फ्रीं ग्लूं स्हौः ह्रौं हूं क्ष्रौं ब्लीं ह्रीं जय जय राक्षसक्षयकारिणि ओं ह्रीं हूं ठः ठः ठः फट् फट् फट् नमः स्वाहा भीमादेवि, ओं ऐं श्रीं ह्रीं हूं फ्रें ख्फ्रें हसखफ्रीं हसख्फ्रें फें प्रविश संसारं- महामाये फें फट् ब्रह्मशिरोनिकृन्तनि विष्णुतनुनिर्दलिनि जे जम्भिके स्तें स्तम्भिके छिन्दि छिन्दि भिन्दि भिन्दि दह दह मथ मथ पच पच पञ्चशवारूढे पञ्चागमप्रिये ग्लूं ब्लीं ध्रौं श्रीं क्लीं फें पञ्चपाशुपतास्त्रधारिणि हूं हूं हूं फट् फट् स्वाहा ब्रह्मनिकृन्तनि ओं नमः परशिवविपरीताचारकारिणि ह्रीं श्रीं क्लीं छ्रीं स्त्रीं महाघोरविकरालिनि खण्डार्धशिरोधारिणि भगवत्युग्रे फ्रें ख्फ्रें हसफ्रीं हसखफ्रें.....................[प्राभातिककूट] म्लक्षकसहह्लूं हूं फट् स्वाहा, ह्रीं हूं अधमस्तके क्रीं ओं हूं फ्रें स्त्रीं फ्रों चण्डखेचरि ज्वल ज्वल प्रज्वल प्रज्वल निर्मांसदेहे ठः ठः चण्डखेचरि, ओं नमः प्रचण्डघोरदावानलवासिन्यै ह्लीं ह्लं समयविद्याकुल-तत्त्वधारिण्यै महामांसरुधिरप्रियायै छ्रीं स्त्रीं क्लीं धूमावत्यै सर्वज्ञतासिद्धिदायै फ्रें फट् स्वाहा धूमावति । ऐं ह्रीं आं ह्लां सौः क्लीं महाभोगिराज भूषणे सृष्टिस्थितिप्रलयकारिणि हूं हूंकारनादभूरिकालनाशिनि भ्रामरि भ्रामरि डमरुभ्रामिणि ऐं क्ली स्फ्रों छ्रीं स्त्रीं फ्रें ख्फ्रें हसखफ्रीं हसख्फ्रें फट् नमः स्वाहा तामसि, ओं ऐं समरविजयदायिनि मत्तमातङ्गयायिनि श्रीं आं क्रः भगवति जयन्ति समरे जयं देहि देहि मम शत्रून् विध्वंसय विध्वंसय विद्रावय विद्रावय भञ्ज भञ्ज मर्दय मर्दय तुरु तुरु श्रीं क्लीं स्त्रीं नमः स्वाहा जयन्ति, ओं श्रीं आं क्रों क्लीं हूं क्ष्रूं ह्रैं एकानंशे डमरुडामरि नीलाम्बरे नीलविभूषणे नीलनागासने सकल-सुरासुरान् वशे कुरु कुरु जन्यिके कन्यिके सिद्धदे वृद्धिदे छ्रीं स्त्रीं हूं क्लीं फ्रें ह्रौं फट् स्वाहा एकानंशे, ऐं ब्रह्मवादिन्यै ब्रह्मरूपिण्यै ठः ठः ब्रह्मरूपिणि ओं ह्लीं श्रीं क्लीं ग्लीं भगवति नीललोहितेश्वरि त्रिभुवनं रञ्जय रञ्जय सकलसुरासुरान् आकर्षयाकर्षय नमः स्वाहा नीललोहितेश्वरि, ऐं श्रीं त्रिकालवेदिन्यै स्वाहा त्रिकालवेदिनि, ओं श्रीं ह्लीं क्लीं स्त्रीं फ्रें हूं फट् ब्रह्मवेतालराक्षसि क्रीं क्ष्रूं फ्रों विष्णुशवावतंसिके छ्रीं स्हौः ग्लूं महारुद्रकुणपारूढे ऐं आं ह्रौं फट् फट् फट् नमः स्वाहा कोरङ्गि, ओं ऐं श्रीं ह्लीं क्लीं ह्रौं हूं आं छ्रीं स्त्रीं हूं फ्रें क्रीं क्लौं स्वाहा रक्तदन्ति, कः क्लीं ग्लीं फ्रें ख्फ्रें

वधूबीजं पुनर्मन्त्रद्वितीयं बीजमुद्धरेत् ॥
हृन्मन्त्रो वह्निजाया च मन्त्रोऽयं षोडशाक्षरः ।
अथवा कामिनीबीजात् पूर्वं क्रोधमनुस्मरेत् ॥
इयं हि भरतोपास्या कीलितापि च शापतः[१] ।
× × ×

भरतोपास्या षोडशाक्षरी द्विविधा तत्राद्या कीलिता द्वितीया त्वकीलितेत्यर्थः । सप्तदशाक्षरीमाह—

रामोपास्यामतो वक्ष्येऽक्षरसप्तदशान्विताम् ।
सापि हारीतमुनिना कीलिता तपसो बलात् ॥
आदौ तस्यैव मन्त्रस्य चतुरोऽर्णान् समुद्धरेत् ।
द्वितीयबीजोपरि च हसखं विनियोजयेत् ॥
एवं तु पञ्चमं बीजं षष्ठं खेन च वर्जितम् ।
सप्तमं हसहीनं च करालि तदनन्तरम् ॥
त्रयोदशैकादशके स्थाने सप्तममक्षरम् ।
पञ्चमं द्वादशस्थाने द्वितीयं च चतुर्दशे ॥
आद्यं पञ्चदशे कुर्याद् वह्निजायान्तगो मनुः ।
हारीतोपासिता ह्येषा च्यवनोपासितां शृणु ॥
षष्ठपञ्चमयोरस्य व्यत्ययः समुदीरितः ।
एतावतैव भवति च्यावनी सुमहाफला ।

अत्रापि रामोपासिता सप्तदशाक्षरी द्विविधा हारीतोपासिता च्यवनोपासिता च । तयोर्मध्ये हारीतोपासितैव कीलिता च्यवनोपासिता तु न कीलितेति बोध्यम् ।

ऋष्यादिकमाह—

षोडशाक्षरयोर्मन्त्रभेदयोरधुना ब्रुवे ।
ऋष्यादिकं ततः सप्तदश्याश्च कथयामि ते ॥
अथर्वा ऋषिरुद्दिष्टो जगती छन्द उच्यते ।
देवता गुह्यकाली च द्वितीयार्णं तु कीलकम् ॥
शक्तिस्तु दशमं बीजं द्वितीये नवमं भवेत् ।
पुरुषार्थचतुष्कस्य सिद्धये कामनास्थितिः ॥

---

१—द्र० म० सं० गु० ख० पटलः १। श्लोक संख्या १—१६ ।

सुप्तवक्ष्यास्तु मन्त्रस्य परमेष्ठी ऋषिर्मतः।
छन्दश्च सुप्रतिष्ठाख्यं देवता गुह्यकालिका ॥
पञ्चमार्णं कीलकं स्यात् सप्तमं शक्तिरुच्यते।
तदेव विपरीतं हि च्यावन्यां समुदीरितम् ॥
प्रयोगः सर्वसिद्ध्यर्थं जपे प्रोच्चारितो भवेत्।
अन्येषां मन्त्रभेदानां यदुद्धारं वदामि ते ॥
तदा ऋष्यादिकं तेषां कथयिष्यामि पार्वति[१]।

अथ षडङ्गन्यासस्तत्रैव—

द्वे पञ्च त्रीणि च द्वे च द्वे पुनर्द्वे पुनस्तथा।
वर्णाक्षराणां भारत्यास्तत्तत्स्थाने प्रविन्यसेत् ॥
तावन्तोऽर्णाः सप्रणवास्तत्र तत्र स्थले न्यसेत्।
यादृशी च्यावनीमन्त्रवर्णावल्यनु तिष्ठति ॥
तारयोर्मध्यवर्तीनि देवीवर्णानि तानि हि।
न्यसेत् स्थानेषु तेष्वेव हारीतोपासिते मनौ[२] ॥

ध्यानमाह—

भरतोपासिता या च रामोपास्या च या स्मृता।
ध्यानं तयोरेकमेव कथ्यमानं मया शृणु ॥
ध्यायेद् देवीप्रभावोत्थप्रोच्छलद्रक्तवारिधिम्।
उत्तुङ्गोत्तुङ्गकल्लोलप्रपूरितदिगन्तरम् ॥
तत्र द्वीपं रक्तमांसपूरितं रक्तवालुकम्।
नवकोटिकचामुण्डाकोटिभैरववेष्टितम् ॥
तन्मध्ये मण्डलं ध्यायेद् योजनायुतविस्तृतम्।
भैरवीकोटिघटितं प्राकारं तत्र चिन्तयेत् ॥
एकं श्मशानं तन्मध्ये शतयोजनविस्तृतम्।
चिन्तयेत् प्रोच्छलद् वह्निज्वालाव्याप्तर्क्षमण्डलम्।
योगिनीकोटिविहितकरतालिकचेष्टितम् ॥
नारान्त्रनद्धमुण्डस्रक्कृततोरणमालिकम्।
तदन्तः स्थायिनीं कालीं ध्यायेन्निश्चलमानसः[३] ॥

---

१—द्र० म० सं० गु० ख०पटलः ५ श्लोक संख्या १७—२७।
२—,, ,, ,, ५, ,, १६६—१६६।
३—द्र० म० गु० ख० पटलः १, श्लोकसंख्या २८—३४।

रत्नसिंहासनं दिव्यं हीरामुक्तादिनिर्मितम् ।
धारयन्तं चतुष्कोणे युगं वेदं विचिन्तयेत् ॥

सत्ययुगं च ऋग्वेदं शुक्लवर्णं च पूर्वगम् ।
त्रेतायुगं यजुर्वेदं पीतवर्णं च दक्षगम् ॥

द्वापरं सामवेदं च रक्तं पश्चिमदिग्गतम् ।
अथर्ववेदं च कलिं श्याममुत्तरदिग्गतम् ॥

उपवेदस्य शुभ्रस्य मूर्ध्नि सिंहासनं स्थितम् ।
तस्य सिंहासनस्योर्ध्वमन्यत् सिंहासनं महत् ॥

स्वस्वास्त्रवाहनयुतैर्दिगष्टपतिभिर्वृतम् ।
देव्याः सिंहासनधरांस्तांश्च ध्यायेदतन्द्रितः ॥

स्वां स्वां दिशमवष्टभ्य स्थितान् परमशोभितान् ।
इन्द्रं पीतं सवज्रं च स्थितमैरावतोपरि ॥

पावकं रक्तवर्णं च छागस्थं शक्तिपाणिकम् ।
यमं कृष्णं कासरस्थं दण्डहस्तं भयानकम् ॥

निर्ऋतिं धूमवर्णं च खड्गहस्तं तुरङ्गमम् ।
वरुणं पाशहस्तं च शुभ्रं मकरवाहनम् ॥

श्यामं वायुं ध्वजधरं हरिणोपरि संस्थितम् ।
गदाधरं कुवेरञ्च कुङ्कुमाभं नरे स्थितम् ॥

ईशानं शुभ्रवर्णं च शूलहस्तं वृषे स्थितम् ।
सिंहासनं तृतीयं च पञ्चप्रेतैर्वृतं प्रिये ॥

ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ।
एते पञ्च महाप्रेताः स्थिताः सिंहासनादधः ॥

पीतः श्यामस्तथा रक्तो धूम्रः श्वेतः क्रमादिमे ।
दण्डं चक्रं च शक्तिं च शूलं खट्वांगमेव च ॥

धारयन्तो मुखे न्यस्ततर्जनीकास्त्रिलोचनाः ।
केशरिद्विपकोलाश्च फेत्काररवभीषणाः ॥

ऊर्ध्वं स्थूलतरं घोरं कृष्णवर्णं चतुर्भुजम् ।
पञ्चवक्त्रं त्रिनेत्रं च कीकशाभरणान्वितम् ॥

खट्वाङ्गं कर्त्तृकां दक्षे कपालं डमरुं तथा ।
धारयन्तं मुण्डमालायुतं दंष्ट्राप्रभीषणम्[1] ॥

---

१—म० म० सं० पु० ख० पटलः १, श्लोकसं० ३३—५० ।

तदूर्ध्वं षोडशदलं पद्मं यज्ञोपकल्पितम् ।
ज्योतिष्टोमोऽग्निष्टोमो वाजपेयश्च षोडशी ॥
चयनं पुण्डरीकश्च राजसूयोऽश्वमेधकः ।
बार्हस्पत्यं विश्वजिच्च गोमेधो नरमेधकः ॥
सौत्रामण्यर्धसावित्री सूर्यकान्तोऽचलम्भिदः ।
एतादृशैः षोडशभिर्दलैः पद्मं प्रकल्पितम् ॥
तस्योपरि ततो ध्यायेच्छिवासनमनुत्तमम् ।
बिन्दुनादयुतं नील शशाङ्ककृतलाञ्छनम् ॥
महार्घरत्नाभरणं त्रिनेत्रं भीमदर्शनम् ।
वज्रदंष्ट्रानखस्पर्शं पद्मपृष्ठे शिवोत्तमम् ॥
पिङ्गोग्रैकजटाभारं द्विभुजं नागहारिणम् ।
वसानं चर्मवैयाघ्रं शूलखट्वाङ्गधारिणम् ॥
अष्टपत्राम्बुजं तस्योपरिष्टान्नवमासनम् ।
धर्मो ज्ञानं च वैराग्यमैश्वर्यं च चतुर्दिशि ॥
यशो विवेकः कामश्च मोक्षश्चेति विदिग्दिशि ।
एवमष्टदलाम्भोजोपविष्टां गुह्यकालिकाम् ॥
ध्यायेन्नीलोत्पलश्यामामिन्द्रनीलसमद्युतिम् ।
घनाघनतनुद्योतां स्निग्धदूर्वादलद्युतिम् ॥
ज्ञानरश्मिच्छटाटोपज्योतिर्मण्डलमध्यगाम् ।
दशवक्त्रां गुह्यकालीं सप्तविंशतिलोचनाम् ॥
द्विद्विनेत्रयुतां वक्त्रे वामदक्षिणसंमुखे ।
सप्तस्वन्येषु वक्त्रेषु त्रित्रिलोचनसंयुताम् ॥
उर्ध्ववक्त्रं द्वीपकाख्यं चण्डयोगेश्वरीति हि ।
तस्याधः केशरिमुखं श्वेतवर्णं विभीषणम् ॥
तस्याधः फेरुवक्त्रं च कृष्णं त्रैलोक्यडामरम् ।
वानरास्यं ततो वामे रक्तवर्णं महोज्ज्वलम् ॥
नरास्यं तदधो ज्ञेयं किर्मीराभं महोत्कटम् ।
ऋक्षवक्त्रं भवेद्दक्षे धूम्रवर्णं भयानकम् ॥
गारुडास्यं ततो वामे पिङ्गवर्णं सुचञ्चुकम् ।
दक्षिणे मकरास्यं च हरिताभं प्रकीर्तितम्[1] ॥

---

१—ज० म० सं० गु० का० पटलः १, श्लोक सं० ५१—६५ ।

गजास्यं वामतः प्रोक्तं गौरवक्त्रं स्त्रवन्मदम् ।
हयास्यं दक्षिणे काल्याः श्यामवर्णं विचिन्तयेत् ॥
महादंष्ट्राकरालानि दारुणस्वनवन्ति च ।
अट्टाट्टहासयुक्तानि स्त्रवद्रक्तानि सर्वदा ॥
लेलिहानविनिष्क्रान्तललज्जिह्वान्वितानि च ।
अहर्निशं कम्पमानान्यास्यानि दधतीं शिवाम् ॥
भीमनिर्ह्रादिनीं भीमां भ्रूभङ्गकुटिलाननाम् ।
पिङ्गलोर्ध्वजटाजूटां चन्द्रार्धकृतशेखराम् ॥
नानारत्नविनिर्माणसुमुण्डस्वर्णभूषणाम् ।
स्त्रवद्रक्तनृमुण्डासृक्कृतनक्षत्रमालिकाम् ॥
आकण्ठगुल्फलम्बिन्यालङ्कृतां मुण्डमालया ।
श्वेतास्थिगुलिकाहारग्रैवेयकमहोज्ज्वलाम् ॥
शवदीर्घाङ्गुलीपङ्क्तिमण्डितोरःस्थलस्थिराम् ।
कठोरपिङ्गलोत्तुङ्गवक्षोजयुगलान्विताम् ॥
महामारकतग्राववेदिश्रोणिपरिष्कृताम् ।
विशालजघनाभोगामतिक्षीणकटिस्थलाम् ॥
अन्त्रनद्धार्भकशिरोवलत्किङ्किणिमण्डिताम् ।
चतुःपञ्चाशता दोष्णां भूषितां जगदम्बिकाम् ॥
रत्नमालां कपालं च चर्मपाशं तथैव च ।
शक्तिं खट्वाङ्गमुण्डे च भुशुण्डीं धनुरेव च ॥
चक्रं घण्टां ततो बालप्रेतशैलमतः परम् ।
नरकङ्कालनकुलौ सर्पमुन्मादवंशिकाम् ॥
मुद्गरं वह्निकुण्डं च डमरुं डिण्डिमं तथा ।
भिन्दिपालं च मुशलं पाशं पट्टिशमेव च ॥
शतघ्नीं च शिवापोतं वामहस्तेषु बिभ्रतीम् ।
अथ दक्षभुजे रत्नमालां कर्त्रीमसिं तथा ॥
तर्जनीमङ्कुशं दण्डं रत्नकुम्भं त्रिशूलकम् ।
पञ्च पाशुपतान् बाणान् शोषकोन्मादमूर्छकान् ॥
संहारकान् मृत्युकरानेवं नामप्रधारिणः ।
कुन्तं च पारिजातञ्च छुरिकां तोमरं तथा[1] ॥

---

१—म० म० सं० गु० ख० पटलः १, श्लोक संख्या ६६—८०।

पुष्पमालां डिण्डिमं च गृध्रं चैव कमण्डलुम् ।
मांसखण्डं श्रुवं बीजपूरं श्रुचं तथैव च ॥
परशुं च गदां यष्टिं मुष्टिं कुणपलालनम् ।
धारयन्तीं महारौद्रीं जगत्संहारकारिणीम् ॥
जवापुष्पाभनागेन्द्रकृतनूपुरयुग्मकाम् ।
पाटलोरगनिर्माणलसदङ्गदशोभिताम् ॥
धूसराहिकृतस्फीतकटिसूत्रावलम्बिनीम् ।
सुपाण्डुरभुजङ्गेन्द्रकृतताटङ्कशोभिताम् ॥
श्वेतदर्वीकरानद्धजटामुकुटमण्डिताम् ।
वैयाघ्रचर्मवसनां द्वीपिचर्मोत्तरीयकाम् ॥
किङ्किणीजालशोभाढ्यां वीरघण्टानिनादिनीम् ।
नूपुरारावललितां घर्घराशब्दभीषणाम् ॥
कटकाङ्गदकेयूरनरास्थिकृतशोभनाम् ।
रक्तपद्ममयीं मालां पादपद्मावलम्बिनीम् ॥
काञ्चीकट्टारकप्रेङ्खत्कटिमध्यविराजिताम् ।
ब्रह्मसूत्रोज्ज्वलत्कण्ठयोगपट्टोत्तरीयकाम् ।
सौम्योग्रभूषणैर्युक्तां नागाष्टकविराजिताम् ।
रत्नकुण्डलकर्णश्रीपञ्चकालानलस्थिताम् ॥
पद्मोपरि स्थितां देवीं नृत्यमानां सदोदिताम् ।
पद्मासनसुखासीनां सर्वदेवाधिदेवताम् ॥
मुक्तहुंकारजिह्वाग्रं चालयन्तीं विचिन्तयेत् ।
त्रिकोटिशक्तिचामुण्डानवकोटिभिरन्विताम् ॥
महायोगिनिकोटीनामष्टादशभिरूर्जिताम् ।
चरन्तीं च हसन्तीं च डाकिनीषष्टिकोटिभिः ॥
भैरव्यशीतिकोटीभिः परिवारैश्च वेष्टिताम् ।
कोटिकालानलज्वालान्यक्कारोद्यत्कलेवराम् ॥
महाप्रलयकोट्यर्कविद्युदर्बुदसन्निभाम् ।
दुर्निरीक्षां महाभीमां सेन्द्रैरपि सुरासुरैः ॥
शत्रुपक्षक्षयकारीं दैत्यदानवसूदिनीम् ।
निर्विकारां निराभासां कूटस्थां चिद्विलासिनीम्[1] ॥

---

१—इ० म० सं०, गु० छ०, पटलः १, श्लोकसंख्या ८१—९६ ।

अद्वैतां परमानन्दां नित्यां शुद्धां निरञ्जनाम् ।
सृष्टिः स्थितिश्च संहारोऽनाख्या भासा पदाभिधाम् ॥
वेदान्तवेद्यां कैवल्यरूपां निर्वाणकारिणीम् ।
गुणातीतामातमरूपप्रबोधातीतगोचराम् ॥
एवं ध्येया महाकाली प्रोद्भिन्ननवयौवना ।
पञ्चवक्त्रस्य मध्यस्था गुह्यकाली परेश्वरी[1] ॥

अथ पुरश्चरणं तत्रैव ।

पर्वते वा नदीकूले शून्यागारे शिवालये ।
पीठे चतुष्पथे कुर्यात् पुरश्चरणमुत्तमम् ॥
नियमास्तत्र भूयांसः प्रकर्त्तव्याः प्रयत्नतः ।
अवैधकरणात् सिद्धिहानिः स्यान्नात्र संशयः ॥
त्रिकालमाचरेत् स्नानं हविष्यं भक्षयेन्निशि ।
स्वमन्त्रं चाक्षसूत्रं च गुरोरपि न दर्शयेत् ॥
त्यजेद् दुष्टप्रवादं च परोवादं च वर्जयेत् ।
तथा दुर्जनसंसर्गान् स्त्रीशूद्रालापनं तथा ॥
वस्त्रं कुशासनं व्याघ्रचर्म चापि नृमुण्डकम् ।
आसनं च महादेवि प्रशस्तश्चोत्तरामुखः ॥
शुद्धस्फटिकरुद्राक्षनृमुण्डास्थिविनिर्मिताम् ।
जपमालां शुभां विद्धि प्रशस्तामुत्तरोत्तराम् ॥
अनेनोक्तविधानेन लक्षसंख्यं जपेन्मनुम् ।
होमं दशांशतः कुर्यात् तर्पणं चाभिषेचनम् ॥
ततः सिद्धमनुर्मन्त्री प्रयोगानाचरेत् प्रिये[2] ।

× × ×

दशवक्त्रातु या प्रोक्ता गुह्यकाली मया तव ।
प्रकृतिः सा परिज्ञेया कालीनां जगदम्बिका ॥
अन्या विकृतयः प्रोक्ताः कार्यकारणभेदतः ।
सैव ज्ञेया वरारोहे निर्गुणब्रह्मरूपिणी ॥
जगत्सर्वं वशे तस्या वश्या कस्यापि सा न च ।
विश्वं सर्वं सृजति सा कोऽपि सृजति तां नहि ॥
सा पालयति संसारं तां पालयति कोऽपि न ॥

---

१—म० म० सं० गु० ख०, पटलः १, श्लोक संख्या ६७–१०१ ।
२—म० म० सं० का० ख०, पटलः ६, श्लोक ५–१२ ।

तां न संहरते कोऽपि सा सर्वं संहरत्यदः ।
तदाज्ञयाऽनिलो वाति सूर्यस्तपति तद्भयात् ॥
तद्भीत्याग्निः पचत्यन्नं मृत्युश्चरति तद्भयात्[1] ।

× × ×

मकलाकालीमन्त्र :—

परात्पर परेशान शशाङ्ककृतशेखर ।
योगादियोगिन् सर्वज्ञ सर्वभूतदयापर ॥
त्वत्तः श्रुताः मया मन्त्राः सर्वतन्त्रेषु गोपिताः ।
विधिवत् पूजनं चापि न्यासावरणकक्रमैः ॥
तारा च छिन्नमस्ता च तथा त्रिपुरसुन्दरी ।
बाला च वगला चापि त्रिपुरा भैरवी तथा ॥
काली दक्षिणकाली च कुब्जिका विव[शव]रेश्वरी ।
अघोरा राजमातङ्गी सिद्धिलक्ष्मीस्त्वरुन्धती ।
अश्वारूढा भोगवती नित्यक्लिन्ना च कुक्कुटी ॥
कौमारी चापि वाराहो चामुण्डा चण्डिकापि च ।
भुवनेशी तथोच्छिष्टचाण्डाली चण्डघण्टिका ॥
कालसङ्कर्षिणी चापि गुह्यकाली तथापरा ।
एताश्चान्याश्च वै देव्यः समन्त्राः कथितास्त्वया ॥
किन्तु कामकलाकालीं नोक्तवानसि मे प्रभो ।
तत्किं मय्यपि गोप्यं ते प्रायशः परमेश्वर ॥
न हीदृशं त्रिलोकेषु तव किञ्चन विद्यते ।
यदकथ्यं मयि भवेदपि प्राणाधिकाधिकम् ॥
तत् किं गोपयसि प्राज्ञ मयीदं दैवतं महत् ।
यद्यस्मि ते दयापात्रं मान्यास्मि स्नेहभाजनम् ॥
अनुग्राह्यास्मि कान्तास्मि तदेमां वद साम्प्रतम् ।
देवीं कामकलाकालीं समन्त्रध्यानपूर्विकाम् ॥

महाकाल उवाच

धन्यास्यनुगृहीतासि तया देव्यैव सर्वथा ।
यत्ते बुद्धिः समुत्पन्ना तां देवीं प्रति भामिनि[2] ॥

---

१—द्र० सं० वि०गु०ख० पटलः १, श्लोक संख्या १२६–३० तथा १३४—१[illegible]
२—द्र० म० सं० का० खं० पटलः १, श्लोक संख्या १—१२ ।

विधाय शपथं देवि कथयामि तवाग्रतः ।
न हीदृशं भुक्तिमुक्तिसाधनं भुवि विद्यते ॥
यथार्थमात्थ देवि त्वं गोप्यत्वं चापि सर्वथा ।
किन्तु भक्तिविशेषात्ते कथयामि न संशयः ॥
राज्यं दद्याद् धनं दद्यात् स्त्रियं दद्याच्छिरस्तथा ।
न तु कामकलाकालीं दद्यात् कस्यापि न क्वचित् ॥
इन्द्रेणोपासिता पूर्वं देवराज्यमभीप्सता ।
वरुणेन कुवेरेण ब्रह्मणा च मया तथा ॥
रामेण रावणेनापि यमेनापि विवस्वता ।
चन्द्रेण विष्णुना चापि तथान्यैश्च महर्षिभिः ॥
सहेलं वा सलीलं वा यस्याः स्मरणमात्रतः ।
विद्यालक्ष्मीः राज्यलक्ष्मीः कीर्तिलक्ष्मीर्वशे स्थिता ॥
विद्यार्थी लभते विद्यां धनार्थी लभते धनम् ।
राज्यार्थी लभते राज्यं कान्तार्थी कामिनीं शुभाम् ॥
यशोऽर्थी कीर्तिमाप्नोति मुक्त्यर्थी मुक्तिमाप्नुयात् ।
अणिमाद्यष्टसिद्ध्यर्थी सिद्ध्यष्टकमवाप्नुयात्[1] ॥
द्विसप्ततितमं यावद् पुरुषाः पूर्वजाः स्मृताः ।
तेषां भाग्योदयैः पूर्णैर्विद्येयं यदि लभ्यते ॥
तदा सर्वस्वदानेन गृह्णीयादविचारयन् ।
कृतकृत्यं मन्यमानो गुरोः पादावभिस्पृशन् ॥
एकतः प्राणदानं स्यादेकतश्चैतदर्पणम् ।
तुलया विधृतं चेत्स्यादेतद् दानं विशिष्यते ॥
पूर्वजन्मार्जितैः पुण्यैर्लभ्यते वा न लभ्यते ।
शपथं कुरु देवेशि प्रकाश्येयं न कुत्रचित् ॥
सत्यं सत्यं त्रिसत्यं मे ततो वक्ष्यामि पार्वति ।
नो चेत् तेऽपि न वक्ष्यामि प्रमाणं तत्र सैव मे ॥

देव्युवाच

शपे त्वच्चरणाब्जाभ्यां हिमाद्रि शिरसा शपे ।
शपे स्कन्दैकदन्ताभ्यां यद्येनामन्यतो ब्रवे[2] ॥

१—प्र० म० सं० का० का० पटलः १, श्लोक संख्या १३—२० ।
२—„ „ „ „ २८,२९,३१,३३—३६ ।

शपेऽथ वा तया देव्या यां मे त्वं कथयिष्यति ।
प्रकाशयामि यद्येनां सैव मे विमुखी भवेत् ॥

महाकाल उवाच

साधु साधु महाभागे प्रतीतिर्मेऽधुना त्वयि ।
अकार्षीः शपथं यस्मात् तस्माद् वक्ष्याम्यसंशयम् ॥
समाहिता सावधाना भव देवि वरानने ।
विधेहि चित्तमेकाग्रं बद्ध्वाञ्जलिपुटं प्रिये ॥
कालीं कामकलापूर्वां शृणुष्वावहिता मम[1] ।
× × ×
या गुह्यकाली सैवेयं काली कामकलाभिधा ॥
मन्त्रभेदाद् ध्यानभेदाद् भवेत् कामकलात्मिका ।
यथा त्रिभेदा तारा स्यात् सुन्दरी सप्तसप्ततिः ॥
दक्षिणा पञ्चभेदा स्यात् तथेयं गुह्य कालिका ।
सप्तधा ध्यानमन्त्राभ्यां जायते भिन्नरूपिणी ॥
यथा पञ्चाक्षरो मन्त्रो देवी चैकजटा स्मृता ।
द्वाविंशत्यक्षरो मन्त्रो देवी दक्षिणकालिका ॥
तथान्येष्वपि देवेषु मुख्यासु बहुषु प्रिये ।
देवी कामकलाकाली मनुरष्टादशाक्षरः ॥
षोडशार्णा यथा मुख्या सर्वश्रीचक्रमध्यगा ।
तथेयं नवकालीषु सदा मुख्यतमा स्मृता ॥
त्रैलोक्याकर्षणो नाम मन्त्रोऽस्याः परिकीर्तितः ।
तस्योद्धारं प्रवक्ष्यामि शृणु यत्नेन पार्वति[2] ॥
श्रुत्वावधारयस्वेमां सर्वकल्याणहेतवे

मन्त्रोद्धारमाह—

आद्यवर्गाद्यवर्णोऽक्ष्णा वामेन परिशीलितः ।
मूर्ध्नि मूर्धा यतृतीययुगधः परिकीर्तितः ॥
बिन्दुवामाक्षिसंयुक्तो वह्निः खपरमस्तकः ।
वामश्रुत्यर्धचन्द्रेण तृतीयः सपरो भवेत् ॥
दक्षस्कन्धोर्ध्वदन्ताभ्यां चाक्ष[धो]रो बिन्दुमस्तकः ।
ओष्ठवर्गद्वितीयो हपूर्वाधरोष्ठबिन्दुयुक् ॥

---

१—द्र० म० सं० का० ख० पटलः १, श्लोक संख्या ३७—४०।
२—,, ,, ,, ,, ४७-५४ ।

षडक्षराणि संबोध्य यथानामस्थितिक्रमात् ।
प्रतिलोमेन चोद्धृत्य तानि बीजानि पञ्च वै ॥
भूतबीजाद्यमारभ्य मारबीजान्तमेव हि ।
वैश्वानरवधूयुक्तो मन्त्रो ह्यष्टादशाक्षरः ॥
अस्याः स्मरणमात्रेण यावत्यः सन्ति सिद्धयः ।
स्वयमायान्ति पुरतो जपादीनां च का कथा ॥
सप्त कामकलाकाल्याः मनवः सन्ति गोपिताः ।
तेषु सर्वेषु मन्त्रेषु मुख्योऽयं परिकीर्तितः ॥
स्मरणादस्य मन्त्रस्य मूर्छिताः सर्वदेवताः ।
स्तम्भिताः वेपमानाश्च उत्तिष्ठन्त्यतिविह्वलाः ॥
निदेशवर्तिनो भूत्वा वर्तन्ते चेटका इव ।
किं बहूक्तेन देवेशि सत्यपूर्वं ब्रवीम्यहम् ॥
सहस्रवदनेनापि लक्षकोट्याननेन वा ।
महिमा वर्णितुं शक्यो नास्य वर्षायुतैर्मया ॥
सामान्यतो विजानीहि यद्यदिच्छति साधकः ।
तत्तत्करोति सकलं प्रजापतिरिवापरः ॥
त्रैलोक्याकर्षको नाम मन्त्रः सर्वार्थसाधकः ।

ऋष्यादिन्यासमाह

अतः परं प्रवक्ष्यामि छन्दश्चर्षिं च बीजकम् ।
अस्य कामकलाकालीमन्त्रस्याहमृषिर्मतः ॥
छन्दश्च बृहती ख्यातं देवी चेयं प्रकीर्तिता ।
आद्यबीजं तु बीजं स्यात् क्रोधार्णं शक्तिरेव च ।
विनियोगोऽस्य सर्वस्य सर्वदा सर्वसिद्धये ॥
षडङ्गं पञ्चबीजैस्तैर्नाम्नाप्येकं च कारयेत् ।
नामाक्षराणि प्रत्येकं तत्र देयानि पार्वति ॥

अथ ध्यानम्

ध्यानमस्याः प्रवक्ष्यामि कुरु चित्तैकतानताम् ।
उद्यद्घनाघनाश्लिष्यज्जपाकुसुमसन्निभाम् ॥
मत्तकोकिलनेत्राभां पक्वजम्बूफलप्रभाम् ।
सुदीर्घप्रपदालम्बिविस्रस्तघनमूर्द्धजाम् ॥ [1]

---

१—म० का० सं०, का० ख०, पटलः २, श्लोक संख्या १—१७ ।

ज्वलदङ्गारवच्छोणनेत्रत्रितयभूषिताम् ।
उद्यच्छारदसम्पूर्णचन्द्रकोकनदाननाम् ॥
दीर्घदंष्ट्रायुगोदञ्चत्विकरालमुखाम्बुजाम् ।
वितस्तिमात्रनिष्क्रान्तललज्जिह्वाभयानकाम् ॥
व्यात्ताननतया दृश्यद्द्वात्रिंशद्दन्तमण्डलाम् ।
निरन्तरं वेपमानोत्तमाङ्गां घोररूपिणीम् ॥
अंसासक्तनृमुण्डासृक् पिबन्तीं वक्त्रकन्दरात् ।
सृक्कद्वन्द्वस्रवद्रक्तस्नापितोरोजयुग्मकाम् ॥
उरोजाम्भोजसंसक्तसंपतद्रुधिरोच्चयाम् ।
सशीत्कृति धयन्तीं तल्लेलिहानरसज्ञया ॥
ललाटे घननारासृग्विहितारुणचित्रकाम् ।
सद्यश्छिन्नगलद्रक्तनृमुण्डकृतकुण्डलाम् ।
श्रुतिनद्धकचालम्बिवतंसलसदंसकाम् ।
स्रवदस्रौघया शश्वन्मानव्या मुण्डमालया ॥
आकण्ठगुल्फलम्बिन्यालङ्कृतां केशवद्धया ।
श्वेतास्थिगुलिकाहारग्रैवेयकमहोज्ज्वलाम् ॥
शवदीर्घाङ्गुलीपंक्तिमण्डितोरःस्थलस्थिराम्
कठोरपीवरोत्तुङ्गवक्षोजयुगलान्विताम् ॥
महामारकतग्राववेदिश्रोणिपरिष्कृताम् ।
विशालजघनाभोगामतिक्षीणकटिस्थलाम् ॥
अन्त्रनद्धार्भकशिरोवलत्किङ्किणीमण्डिताम् ।
सुपीनषोडशभुजां महाशङ्खाश्चदङ्गकाम् ॥
शवानां धमनीपुञ्जैर्वेष्टितैः कृतकङ्कणाम् ।
ग्रथितैः शवकेशैः स्रग्दामभिः कटिसूत्रिणीम् ॥
शवपोतकरश्रेणीग्रथनैः कृतमेखलाम् ।
शोभमानाङ्गुलीमांसमेदोमज्जाङ्गुलीयकैः ॥
असिं त्रिशूलं चक्रं च शरमङ्कुशमेव च ।
लालनं च तथा कर्त्रीमक्षमालां च दक्षिणे ॥
पाशं च परशुं नागं चापं मुद्गरमेव च ।
शिवापोतं खर्परं च वसासृङ्मेदसान्वितम्[1] ।

१—ह० म० सं०, का० ख०, पटलः २, श्लोकसंख्या १८-३२ ।

लम्बत्कचं नृमुण्डं च धारयन्तीं स्ववामतः ।
विलसन्नूपुरां देवीं ग्रथितैः शवपञ्जरैः ॥
श्मशानप्रज्वलद्घोरचिताग्निज्वालमध्यगाम् ।
अधोमुखमहादीर्घप्रसुप्तशवपृष्ठगाम् ॥
वमन्मुखानलज्वालाजालव्याप्तदिगन्तराम् ।
प्रोत्थायैव ह्रि तिष्ठन्तीं प्रत्यालीढपदक्रमात् ॥
वामदक्षिणसंस्थाभ्यां नदन्तीभ्यां मुहुर्मुहुः ।
शिवाभ्यां घोररूपाभ्यां वमन्तीभ्यां महानलम् ॥
विद्युदङ्गारवर्णाभ्यां वेष्टितां परमेश्वरीम् ॥
सर्वदैवानुलग्नाभ्यां पश्यन्तीभ्यां महेश्वरीम् ॥
अतीवभीषमाणाभ्यां शिवाभ्यां शोभितां मुहुः ।
कपालसंस्थं मस्तिष्कं ददतीं च तयोर्द्वयोः ॥
दिगम्बरां मुक्तकेशीमट्टहासभयानकाम् ।
सप्तधा बद्धनारान्त्रयोगपट्टविभूषिताम् ॥
संहारभैरवेणैव सार्धं सम्भोगमिच्छतीम् ।
अतिकामातुरां कालीं हसन्तीं खर्वविग्रहाम् ॥
कोटिकालानलज्वालान्यक्कारोद्यत्कलेवराम् ।
महाप्रलयकोटचर्क विद्युदर्बुदसन्निभाम् ॥
कल्पान्तकारिणीं कालीं महाभैरवरूपिणीम् ।
महाभीमां दुर्निरीक्ष्यां सेन्द्रैरपि सुरासुरैः ॥
शत्रुपक्षक्षयकरीं दैत्यदानवसूदिनीम् ।
चिन्तयेदीदृशीं देवीं कालीं कामकलाभिधाम्[1] ॥

अथ पुरश्चरणं तत्रैव

अतः परं प्रवक्ष्यामि पौरश्चरणिकं विधिम् ।
एकस्मिन् यत्र विहिते सिद्धिस्तात्कालिकी भवेत् ॥
भूमिशुद्धिर्द्रव्यशुद्धिः पूर्वैव कथिता मया ।
यमाश्च नियमा ये स्युः पुरश्चरणकर्मणि ॥
सर्वानेव प्रयुञ्जीत सततं भक्तितत्परः ।
कृतनित्यक्रियः प्रातः कृतपूजाविधिः शुचिः ॥

१—द्र० म० सं० का० ख० पटलः २, श्लोकसंख्या ३३—४३ ।

नरास्थि निखनेद् भूमावस्त्रमन्त्रमुदीरयन् ।
तारं क्रोधोऽनु ह्रीं पाशस्मरभूतान् समुद्धरेत् ॥
सिद्धिमुच्चार्य देहीति युग्मं वह्नयङ्गनां वदेत्[1] ।

अथ कामकलायन्त्रम्

यन्त्रमस्याः प्रवक्ष्यामि तत्र धेहि मनः प्रिये ।
भूपुरे वसुपत्राढये[?] पद्ममष्टदलान्वितम् ॥
केशराणि प्रकल्प्यानि तदन्तश्चापि कर्णिकाम् ।
कर्णिकान्तस्त्रिकोणस्य त्रितयं पृथगेव हि ॥
बहिस्त्रिकोणकोणेषु लिखेद् बीजत्रयं शुभम् ।
मायाबीजं तु वामे स्यात् क्रोधबीजं तु दक्षिणे ॥
अधः पाशं विनिर्दिश्य कन्दर्पार्णं तु मध्यतः ।
तदन्तः स्थायिनी देवी तत्र सर्वं प्रतिष्ठितम् ॥
एतद्यन्त्रं महादेवि सर्वकामफलप्रदम् ।
एतस्य सर्वयन्त्राणि कलां नार्हन्ति षोडशीम्[2] ॥

गुह्यकालीयन्त्रम्

सबिन्दुत्र्यारपञ्चारविभिन्ननवकोणयुक् ।
वृत्तयोरन्तरेऽष्टारयुतं तदनु भाविनि ॥
वस्वर्कभूपच्छदनाम्भोजवृत्तान्वितं ततः ।
अष्टाशनिसमायुक्तमन्तर्बहिरथापि च ॥
अष्टशूलाष्टमुण्डाढयं वह्निज्वालायुतेन हि ।
श्मशानेनावृतं शेषे शोणितोदेन वेष्टितम् ॥
यन्त्रराजमिदं देवि पूजनाय प्रकल्पितम् ।
भरतश्च्यवनश्चापि हारीतश्च जवालकः ॥
दक्षश्चैते जनाः पञ्च पूजयन्त्यमुनाम्बिकाम् ।
बिन्दुः पञ्चारषट्कोणत्रिकोणनवकोणगः ॥
अष्टारवृत्तसहितषोडशच्छदपद्मयुक् ।
पूर्ववृत्तान्वितः शेषे पूर्ववत् सकलं प्रिये ॥
पूज्योऽयं रामयक्षेशनाहुषाणां वरानने[3] ।

× × ×

---

१—म० सं०, का० ख० पटलः ३, श्लोकसंख्या २४-२८ ।
२—द्र० म० सं० का० ख० पटलः २, श्लोक संख्या ४५—४६ ।
३—द्र० म० सं० गु०, ख०, पटलः ५, श्लोक संख्या १३—१६ ।

तथा—

तदुपर्यैव चास्तीर्यं स्वासनं सुष्ठु कल्पितम् ।
नृमुण्डमग्रतः कृत्वा नरास्थिजपमालया ॥
लक्षमेकं जपेन्मन्त्रं हविष्याशी दिवा शुचिः ।
अशुचिश्च तथा रात्रौ लक्षमेकं तथैव च ॥
दशांशं होमयेन्मन्त्री तर्पयेदभिषेचयेत् ।
होमे सन्तर्पणे चैव पूजावत् कथितो विधिः ॥
पूजायां वा प्रयोगे वा होमे वा तर्पणेऽथ वा ।
गुह्यकालीविधानेन सर्वं कार्यं शुचिस्मिते ॥
अत्रानुक्तं विधानं यत् तत्तत्यं तत्प्रकल्पयेत् ।
तत्राप्यनुक्तं यत् किञ्चित् तत्रोक्तो दक्षिणाविधिः[१] ॥

इति कालीमन्त्रपुरश्चरणप्रकरणम् ।

× × ×

श्रीविद्यामन्त्रपुरश्चरणप्रकरणे

नातः परतरा विद्या न भूता न भविष्यति ।
केनापि नैव शप्तेयं न च केनापि कीलिता ॥[२]

× × ×

उद्यच्चन्द्रोदयक्षुब्धरक्तपीयूषवारिधेः ।
मध्ये हेममयीभूमीरत्नमाणिक्यमण्डिता ॥
तन्मध्ये नन्दनोद्यानं मदनोन्मादनं महत् ।
नित्याभ्युदितपूर्णेन्दुज्योत्स्नाजालविराजितम् ॥
सदा सह वसन्तेन कामदेवेन रक्षितम् ।
कदम्बचूतपुन्नागनागकेशरचम्पकैः ॥
वकुलैः पारिजातैश्च सर्वर्तुकुसुमोज्ज्वलैः ।
झङ्कारमुखरैर्भृङ्गैः कूजद्भिः कोकिलैः शुकैः ॥
नानावर्णैरथान्यैश्च द्विजसङ्घैर्निषेवितम् ।
शिखिकारण्डहंसाद्यैर्नानापक्षिभिरावृतम् ॥
नानापुष्पलताकीर्णैः शोभितं वृक्षखण्डकैः ।
पर्यन्तदीर्घिकोत्फुल्लकमलोत्पलसम्भवैः[३] ॥

---

१—द्र० म० सं०, का० ख०, पटलः ३, श्लोकसं० २८—३३ ।
२—द्र० म० सं०, का० ख०, पटलः ८, श्लोकसंख्या ३५८—३५९ ।
३—द्र० म० सं०, का० ख०, पटल : ८, श्लोकसंख्या ३६४—६९ ।

रजोभिर्धूसरैः सम्यक् सेवितं मलयानिलैः ।
ध्यात्वैवं नन्दनोद्यानं तदन्तः प्राङ्गणं स्मरेत् ॥
शुद्धकाञ्चनसंकाशवसुधाभिरलङ्कृतम् ।
प्राङ्गणं चिन्तयित्वेत्थं सुरसिद्धनिषेवितम् ॥
तन्मध्ये मण्डपं ध्यायेद् व्याप्तब्रह्माण्डमण्डलम् ।
सहस्रादित्यसंकाशं चतुरस्रं सुशोभितम् ॥
रत्नतेजः प्रभापुञ्जपिञ्जरीकृतदिङ्मुखम् ।
मध्यस्तम्भविनिर्मुक्तं कोणस्तम्भसमन्वितम् ॥
महामाणिक्यवैदूर्यरत्नकाञ्चनभूषितम् ।
मुक्तादामवितानाढ्यं रत्नसोपानमण्डितम् ॥
मन्दवायुसमाक्रान्तं गन्धधूपतरङ्गितम् ।
रत्नचामरघण्टादिवितानैरुपशोभितम् ॥
जातीचम्पकपुन्नागकेतकीमल्लिकादिभिः ।
रक्तोत्पलसिताम्भोजमाधवीभिः सुपुष्पकैः ॥
बद्धाभिश्चित्रमालाभिः सर्वत्र समलङ्कृतम् ।
तिर्यगूर्ध्वलसद्रक्तपुत्तलीकोटिमण्डितम् ॥
नानारत्नादिभिर्दिव्यैर्निर्मितं विश्वकर्मणा ।
तन्मध्ये भावयेन्मन्त्री पारिजातं मनोहरम् ॥
स्वर्णादिरत्नभूमिं च बालुकां काञ्चनप्रभाम् ।
उद्यदादित्यसंकाशं व्याप्तब्रह्माण्डमण्डलम् ॥
शतयोजनविस्तीर्णं ज्योतिर्मन्दिरमुत्तमम् ।
चतुर्द्वारसमायुक्तं हेमप्राकारमण्डितम् ॥
रत्नोपक्लृप्तसंशोभिकपाटाष्टकसंयुतम् ।
नवरत्नसमाक्लृप्ततुङ्गगोपुरतोरणम् ॥
हेमदण्डशिखालम्बिध्वजावलिपरिष्कृतम् ।
मध्यकोणस्थितस्तम्भनवरत्नसमन्वितम् ॥
महामाणिक्यवैदूर्यरत्नचामरशोभितम् ।
कल्पवृक्षे गिरेः पार्श्वे छत्रं तन्मण्डपोपरि ॥
सुवर्णसूत्रैरचितं तन्मध्ये रत्नमण्डपम् ।
तन्मध्ये स्फुरितं ध्यायेत् त्रिश्टृङ्गं ज्योतिरुत्तमम् ॥[1]

---

१—ब्र० म० सं० का० ख० पटलः ८, श्लोकसंख्या ३७१—८५ ।

तस्य मध्ये महाचक्रं पीयूषपरिपूरितम् ।
रत्नसिंहासनं तस्या वेद्या मध्ये स्मरेच्छुभम् ॥
विरिञ्चविष्णुरुद्रेशरूपपादचतुष्टयम् ।
सदाशिवमयं साक्षात् तस्मिन् परशिवात्मकम् ॥
पुष्पपर्यङ्कतन्मध्ये श्रीमदुद्यानपीठके ।
पर्यङ्कबन्धविलसन् स्वस्तिकासनशालिनीम् ॥
ध्यायेत् परशिवाङ्कस्थां पद्ममध्योज्ज्वलाकृतिम् ।
त्रिपुरां सुन्दरीं देवीं बालार्ककिरणारुणाम् ॥
जपाकुसुमसंकाशां दाडिमीकुसुमोपमाम् ।
पद्मरागप्रतीकाशां कुङ्कुमारुणसन्निभाम् ॥
स्फुरन्मुकुटमाणिक्यकिङ्किणीजालमण्डिताम् ।
कालालिकुलसंकाशकुटिलालकपल्लवाम् ॥
प्रत्यगारुणसंकाशवदनाम्भोजमण्डिताम् ।
किञ्चिदर्धेन्दुकुटिलललाटमृदुपट्टिकाम् ॥
पिनाकधनुराकारभ्रूलतां परमेश्वरीम्
आनन्दमुदितोल्लासलीलान्दोलितलोचनाम् ॥
स्फुरन्मयूखसंघातविलसद्धेमकुण्डलाम् ।
स्वगण्डमण्डलाभोगजितेन्द्वमृतमण्डलाम् ॥
विश्वकर्मविनिर्माणसूत्रविस्पष्टनासिकाम् ।
ताम्रविद्रुमविम्बाभरक्तोष्ठीममृतोपमाम् ॥
दाडिमीबीजपङ्क्त्याभदन्तपङ्क्तिविराजिताम् ।
स्मितमाधुर्यविजितमाधुर्यरससागराम् ॥
अनौपम्यगुणोपेतचिबुकोद्देशशोभिताम् ।
कम्बुग्रीवां महादेवीं मृणालसदृशैर्भुजैः ॥
रक्तोत्पलदलाकारसुकुमारकरां भुजाम् ।
कराम्बुजनखज्योतिर्विद्योतितनभस्तलाम् ॥
मुक्ताहारलतोपेतसमुन्नतपयोधराम् ।
त्रिबलीवलयामुक्तमध्यदेशसुशोभिताम् ॥
लावण्यसरिदावर्तनिम्ननाभिविभूषिताम् ।
अनर्ध्यरत्नधटितकाञ्चीयुतनितम्बिनीम् ॥[1]

---

१—रु० म० सं०, का० ख०, पटलः ८, श्लोकसंख्या ३८६—४०१ ।

नितम्बबिम्बद्विरदरोमराजिवराङ्कुशाम् ।
कदलीललितस्तम्भसुकुमारोरुमीश्वरीम् ॥
लावण्यकुसुमाकारजानुमण्डलबन्धुराम् ।
लावण्यकदलीतुल्यजंघायुगलमण्डिताम् ॥
गूढगुल्फपदद्वन्द्वप्रपदाजितकच्छपाम् ।
तनुं दीर्घाङ्गुलीछन्ननखराजिविराजिताम् ॥
ब्रह्मविष्णुशिरोरत्ननिधृष्टचरणाम्बुजाम् ।
शीतांशुशतसंकाशकान्तिसन्तानहासिनीम् ॥
लौहित्यजितसिन्दूरजपादाडिमरागिणीम् ।
रक्तवस्त्रपरीधानां पाशाङ्कुशकरोद्यताम् ॥
रक्तपद्मनिविष्टां तु रक्ताभरणभूषिताम् ।
जगदाह्लादजननीं जगद्रञ्जनकारिणीम् ॥
चतुर्भुजां त्रिनेत्रां तु पञ्चवाणधनुर्धराम् ।
कर्पूरशकलोन्मिश्रताम्बूलपूरिताननाम् ।
महामृगमदोद्दामकुङ्कुमारुणविग्रहाम् ।
सर्वशृङ्गारवेशाढयां सर्वाभरणभूषिताम् ॥
जगदानन्दजननीं जगद्रञ्जनकारिणीम् ।
जगदाकर्षणकरीं जगत्कारणरूपिणीम् ॥
सर्वलक्ष्मीमयीं नित्यां सर्वशक्तिमयीं भजे ।[१]

अथ दीपिनीविद्या तत्रैव

वाङ्माया कमला बीजं वाग्भवाद्ये नियोजयेत् ।
तारं लक्ष्मीं च वाग्बीजं मन्मथं भुवनेश्वरीम् ॥
तज्जप्त्वा च ततः पश्चाद् वाग्भवाख्यं समुच्चरेत् ।
प्रणवं भुवनेशानीं रमां कामं च वाग्भवम् ॥
कामराजं ततो जप्त्वा त्रैलोक्यक्षोभकारकम् ।
ऊँकारं चापि वाग्बीजं रमां मन्मथमायया ॥
स्वप्नावतीं महादेवि जपेत् तत्र समाहितः ।
प्रणवं चाधरं कामं रमां च भुवनेश्वरीम् ॥
मधुमतीं ततो जप्त्वा मायाश्रीकूर्चबीजकम् ।

---

१—रु० म० सं० का० ख० पटलः ८, श्लोकसंख्या ४०२—४१० ।

प्रणवाद्यं च देवेशि हंसबीजपुटीकृतम् ॥
एतद्वीजं समुच्चार्य शक्तिकूटं ततो जपेत्[1] ।

× × ×

छिन्नमस्तामन्त्रपुरश्चरणम्—

अथातश्छिन्नमस्तायाः मन्त्रं ते व्याहराम्यहम् ।
जिघृक्षयापि यस्य स्युः साधकस्याष्टसिद्धयः ॥
नातः परतरा काचिदुग्रा देवी भविष्यति ।
तस्मादसक्तैर्मनुजैर्न ग्राह्येयं कथञ्चन ॥
सिद्धिर्वा मृत्युरपि वा द्वयोरेकतरं भवेत् ।
प्रणवं च रमाबीजं लज्जां वाग्भवमेव च ॥
वज्रवैरोचनीये च इत्येवं तत उद्धरेत् ।
क्रोधद्वयं ततश्चास्त्रं स्वाहान्तः षोडशाक्षरः ॥

× × ×

ध्यानमस्याः प्रवक्ष्यामि तत्र चेतो निवेशय ।
स्वनाभौ नीरजं ध्यायेत् शुद्धं विकसितं सितम् ॥
तत्पद्मकोशमध्ये तु मण्डलं चण्डरोचिषः ।
जपाकुसुमसङ्काशं रक्तबन्धूकसन्निभम् ॥
रजःसत्त्वतमोरेखायोनिमण्डलसन्निभम् ।
मध्ये तस्या महादेवीं सूर्यकोटिसमप्रभाम् ॥
छिन्नमस्तां करे वामे धारयन्तीं स्वमस्तकम् ।
प्रसारितमुखीं भीमां लेलिहानोग्रजिह्विकाम् ॥
पिबन्तीं रक्तधारां च निजकण्ठसमुद्भवाम् ।
विकीर्णकेशपाशां तां नानापुष्पसमन्विताम् ॥
दक्षिणे च करे कर्त्रीं मुण्डमालाविभूषिताम् ।
दिगम्बरां महाघोरां प्रत्यालीढपदस्थिताम्[2] ॥

---

१—कृतेऽप्यायासे पद्यान्येतानि महाकालसंहितायाः गुह्यकालीकामकलाकाली-खण्डयोः नोपलब्धानि । अत एव सुधीभिरस्य महाकालसंहितान्तर्गतत्वमिह पुरश्चर्यार्णवेऽभिहितं चिन्तनीयम् ।

२—पु० च० सं०, कां० खं०, पटल ८, श्लोकसंख्या ४४१-४५० ।

अस्थिमालाधरां देवीं नागयज्ञोपवीतिनीम् ।
सदा षोडशवर्षीयां पीनोन्नतपयोधराम् ॥
नागाङ्गनां नागकाञ्चीं नागनूपुरसंयुताम् ।
नागकुण्डलसंयुक्तामष्टनागसमन्विताम् ॥
विपरीतरतासक्तरतिकामोपरि स्थिताम् ॥
डाकिनीवर्णिनीयुक्तां वामदक्षिणयोगतः ।
दक्षिणे वर्णिनीं ध्यायेद् वामपार्श्वे तु डाकिनीम् ॥
वर्णिनीं लोहितश्यामां मुक्तकेशीं दिगम्बराम् ।
कपालकर्त्रिकाहस्तां वामदक्षिणयोगतः ॥
देवीगलोच्छलद्रक्तधारापानं प्रकुर्वतीम् ।
अस्थिमालाधरां देवीं नागयज्ञोपवीतिनीम् ॥
डाकिनीं वामपार्श्वे तु कल्पान्तज्वलनोपमाम् ।
विद्युच्छटाभनयनां दन्तपंक्तिवलाकिनीम् ॥
दंष्ट्राकरालवदनां पीनोत्तुङ्गपयोधराम् ।
महाघोरां महादेवीं मुक्तकेशीं दिगम्बराम् ॥
लम्बोदरीं कालरात्रीं नागयज्ञोपवीतिनीम् ।
लेलिहानमहाजिह्वां मुण्डमालाविभूषिताम् ।
कपालकर्तृकाहस्तां वामदक्षिणयोगतः ॥
देवीगलोच्छलद्रक्तधारापानं प्रकुर्वतीम् ।
करस्थितकपालेन भीषणेनातिभीषणाम् ॥
आभ्यां निषेव्यमाणां तु ध्यायेद् देवीं विचक्षणः ।
दुर्निरीक्ष्यां चेतसापि सर्वकामफलप्रदाम्[1] ॥

पुरश्चर्यार्णवस्य तृतीयभागे एकादशतरङ्गे ९९३ तमपृष्ठतः १०७८ पृष्ठं यावत् दुर्गोत्सवविधिप्रकरणे महाकालसंहितायाः गुह्यकालीखण्डस्य त्रयोदशपटलीयाः श्लोकाः प्रायशः सहस्रमिताः सङ्कलिताः सन्ति । सर्वेषां पद्यानामिह समावेशो ग्रन्थकलेवरं वर्धयेदिति विचार्य स नैव विहितः । तत एवाकलनीयास्ते श्लोकाः सुधीभिः साधकैरिति प्रार्थ्यते ।

---

१—द्र० म० सं०, का० ख०, पटल ८, श्लोकसंख्या ४५१-४५६ ।

# परिशिष्टम् (३)




द्र० महाकालसंहितायाः कामकलाखण्डस्य द्वितीयपटलस्य
श्लोकाः ४५-४६, पृ० ११।




द्र० महाकाल संहितायाः कामकलाखण्डस्य षष्ठपटले
श्लोकाः २२-३०, पृ० ५६-५७।

# परिशिष्टम् (४)

## महाकालसंहिताय : कामकलाखण्डे समागतानां बीजानां कूटानाञ्च वर्णानुक्रमात्मको कोषः ।

अग्निः—रं

अग्निजाया— } स्वाहा
अग्निवल्लभा— } स्वाहा
अग्निस्त्री } स्वाहा
अग्न्यङ्गना— } स्वाहा

अङ्कुशः—क्रों

अङ्गना—स्त्रीं

अतिचण्डः—[?]

अतिचण्डा—[?]

अतिप्रेतः—[?]

अधरः—ऍं

अधोदतः } ओं
अधोदन्तः } ओं
अघोरदः } ओं

अद्वा—ह्रां

अनङ्गः—क्लीं

अनन्तः—ध्रां

अनलभाविनी } स्वाहा
अनलाङ्गना } स्वाहा

अनाख्या—[कूटः] क्षस्हम्लवयरऊं

अनाहृत— हसखफां

अनेहसः—जूं

अप्सरसः—गां

अबला—स्त्रीं

अमरः—य्लैं

अमृतम्—ग्लूं

अमृतम् कूटः- [?]

अश्वमेधः [कूटः] ह्लस्लहमकह्लीं

असूया—णीं

अस्त्रम्—फट्

अस्थिभेदी—ठं

आकाशः—हं

आगमः— ओं [?]

आगमशीर्षः—ओं

आग्नेयः [कूटः]—रक्षम्लह्लकसछव्यऊं

आग्नेयास्त्रम् [उपकूटः]—रम्लव्रीं

आज्ञा [कूटः]—क्षरहम्लव्यईऊं
क्षस्हम्लव्यईऊं

आनन्दः [कूटः]—स्हलकह्लक्ष्म्रूं

आनन्दः—भ्रूं

आद्य [सृष्टिवीजम्]—हसखफ्रूं

आधारः—म्रौं

आमर्षः—हूं

आमृतम्—ग्लूं

आस्यम्—आं

इन्द्रः [बीजम्]—[?]

इन्द्रः ]कूटः] रक्षलह्लमसहकभ्रूं, लम्लव्रीं

इन्द्रस्वरः—औ
इष्टिः [कूटः]—[?]
इष्टिः— रव्लीं
ईशः [कूटः]
ईशानः [कूटः]—व्रकम्लव्लक्लऊं
इर्ष्या—षीं
उग्रः—ढ्रीं
उत्तमाङ्गम्—स्वाहा
उदुम्बरः— म्रीं
उमा [कूटः]—[?]
ऊर्ध्वदन्तः—ओ
ऋषिः [कूटः]—[?]
ऐडः [कूटः]—शम्लव्य्रई, रलहृक्षकलसहृफूं
ओष्ठः—ए
कन्दर्पः—क्लीं
कपालः—भ्रीं
कमला—श्रीं
कर्णिका—क्षरह्रीं
कला—ईं
कल्पान्तः—हसफीं
कवचम्—हूं
काकिनी—फीं
कापालः—भ्रीं
कामः—क्लीं
कामः [कूटः]—[?]
कामलम्—श्रीं
कामाङ्गना [रतिः]—क्लूं
कामिनी—स्त्रीं
काम्यः [कूटः]—[?]
कालः—जूं
कालः [कूटः]—यम्लव्रीं
कालरात्रिः—ख्फीं
कालिका } क्रीं
काली }
कालीयः }
किरीटी [कूटः]—[?]
कुण्डलः [कूटः]—रक्षक्रींऊं
[कुण्डलिनी]
कुमारः— } ह्लूः
कुमारकः— }
कुलाङ्गना—ह्लीं
कुलिकः—स्हौः
कुलिका—क्ष्रस्त्रीं
कूर्चः—हूं
कूर्चः [कूटः]—[?]
कूर्मः—घ्रीं, तीं,
कूष्माण्डी—क्रौं
कृत्या—हस्ख्फ्रीं
कृष्णभार्यका—श्रीं
कोणः—रीं
कौरजः—खं
क्रमः—भ्रीं, ध्रँ,
क्रूरः—रट्रँ,सिं,
क्रोधः—हूं
क्रोधीशः—[?]
खम्—हं
खेचरः [कूटः]—?
खेचरी—ख्रीं
खेचरी [कूटः]—सखवलक्षमध्रयव्लीं
खेदकः—रूं
क्षमा—ज्रूं
क्षेत्रपः— } क्षौं
क्षेत्रपालः— }

क्षोणी—लं
क्ष्वेडः—व्रं
गजघटा [कूटः]—[?]
गणपः—
गणपतिः— } गं
गरुत्मत्—क्रौं
गान्धर्वः—स्फौं
गायत्रीमुखम्—ओं
गारुडः—क्रौं
गुह्यम्—व्रच्रीं
गुह्या—क्ष्लप्रैं
गौरी—क्रः
ग्रहः [कूटः]—[?]
घण्टिका—रफ्लीं
घनः—क्लौं
चक्रः [कूटः]—रक्षव्रभ्रघ्रम्लऊं
चक्षुः—रस्फ्रों
चण्डः—फ्रों
चण्डेश्वरः—[?]
चतुर्थस्वरः—ई
चतुर्दशस्वरः—औ
चन्द्रः—ग्लौं
चन्द्रः [कूटः]—सकह्लमक्षबव्रूं
चामुण्डा—क्रैं
चामुण्डा [कूटः]—[?]
चूडा—स्वाहा [?]
चूडामणिः—रक्ष्रीं, रक्रीं
चैतन्यम्—ऐं
जम्भः—रफीं
जयः—क्रं
जलदः—क्लौं
जाया—स्त्रीं
ज्येष्ठः—द्रूं
डाकिनी—ख्फ्रें
डाकिनी [कूटः]—मह्लक्ष्लब्ध्रऊं
तत्त्वम्—स्हें
तडित्—ब्लौं
ताण्डवी [कूटः]—म्लव्रमई
तात्पुरुषः [कूटः]—क्षमब्लहृकयह्लीं
तापिनी—म्रां
तारः—ओं
तारकः—ओं, रां,
तातींयकः—ह्रीं (?)
तुङ्गः—रच्रीं
तुङ्गः (कूटः)—(?)
तृतीयः—ह्रीं (?)
त्रपा—ह्रीं
त्रिकूटा—र्य्रूं
त्रिपुटा—प्लूं
त्रिशक्तिः—क्रूं
त्रिशिखा—क्रीं
त्रिशूलः (कूटः)—(?)
त्रेता—ह्सखफ्रें
त्वरिता (कूटः)—(?]
त्वष्टा—क्रग्रौं
दक्षनेत्रकम्—इं
दक्षस्कन्धः—क
दक्षिणचक्षुः—इं
दक्षिणा—रफ्रें
दण्डः—ह्लां
दस्रः—ब्लीं
दानवः—श्रीं

दिवाकरः (कूटः)—म्लकह्लक्षरस्त्रीं
(अथवा) नदक्षटक्षव्यईऊँ
दीर्घतनुच्छदः (कवचम्)—हूं
द्रावणः—ह्स्फ्रीं
द्वादशाहः (कूटः)—क्षलहक्षम्लव्रीं
द्वादशिका—ऐ
धनदा—क्ष्रूं
धरा—लं
धरा(कूटः)—ग्लक्षकमह्लव्यऊँ
धर्मः—क्रौं
धर्म्यः—(?)
धृतिः—क्ष्रौः
ध्यानम्—वूः
ध्रुवः—यौं
नकुलीशः—ह (?)
नक्षत्रम्—क्लैं
नक्षत्रम्(कूटः)—?
नन्दनम्—ह्लौं (?]
नभः—हं
ना—पां
नाकुलम्—त्रीं
नागः—व्रीं, तां,
नादः—अं
नारसिंहः—क्ष्रौं
नालीकम्—क्षरस्त्रीं
निरञ्जनम्—स्हीं
निर्मलम्—ज्लूं
निशा(कूटः)—?
नीलः—फ्रौं
नृसिंहः—क्ष्रौं
नृसिंहः [कूटः]—क्षम्लव्रसहह्स्ह क्षक्लंस्त्रीं

पङ्क्तिः—रध्रीं
पदवी—?
पद्मम् [कूटः] म्लव्य्र वऊं
पद्मा—श्रीं
पन्नगः—तां, व्रीं
पयः—वं [?]
परः— ?
परमात्मीयम्—तत्त्वमसि
परा [कूटः] सहक्लह्रीं
परापरः—हसखफ्रं
परापरः [कूटः] हस्लक्षकमह्लव्रूं
पविः—ध्रीं
पावित्रम्—?
पाशः—आं
पाशुपतम् [कूटः]—सग्लक्षमहरह्लूं
पार्श्वम् [कूटः] ?
पित्र्यम् [कूटः]—?
पिनाकीशः— क्षरस्त्रां, खफ्रीं, [?]
पिशाचः—ठः
पीयूषम्—ग्लूं
पुण्डरीकः [कूटः]—पलक्षह्लस्हव्यऊं
पैशाचः—ठः
प्रणवः—ओं
प्रभा—ह्लीं
प्रमदा—स्त्रीं
प्रलयः [कूटः]—स्हक्षम्लव्यऊं [?]
प्रलयः—हसफ्रीं, हसफ्रों
प्रतुङ्गः—[कूटः]—?
प्राभातिकम्—[कूटः]—?
प्रासादः—ह्रौं
प्रेतः—स्हौः

फेत्कारी—हसखफ्रें
वहिरथ [कूटः]—क्षलहक्षम्लक्लीं
बलिः—रछ्रीं
बाला—क्ष्स्रीं
बाला [कूटः]—[?]
बृहद्—[?]
बृहद् [कूट]—स्हकह्ललह्रीं
ब्रह्म—ठौं
ब्रह्म [कूटः]—क्लक्षह्लव्रमयऊं
अथवा क्ष्लफ्लौं
ब्रह्मनिर्मितम्—[सृष्टिः] रक्षखरऊं
ब्रह्मा—डों
ब्रीडा—ह्लीं
भगः— ?
भस्मली— ?
भारुण्डा—प्रीं
भारुण्डा [कूटः]—क्षहलीं
भासा [कूटः]—क्षह्लम्लव्य्रऊं
भासा—व्रफथ्रूं
भीरुः—स्त्रीं
भुजगः—तां, व्रीं
भुवनेशी / भुवनेश्वरी } ह्रीं
भूतः—स्फ्रों
भूतिनी—ख्फ्रीं
भूमिः—लं
भैरवी—सौः
भैरवी [कूटः]—क्षमक्लह्लहसव्य्रऊं
भोगः—हसखफ्रीं
भोजङ्गमः—तां, व्रीं
भौतम् / भौतकम् } स्फ्रों, रलहक्षफ्रूं,

मणिः [कूटः]—भक्ष्लरमहसखफ्रूं
मणिमेखला– [?]
मत्स्यम् [कूटः]—[?]
मदनः—क्लीं
मनः—ठ्रीं, ह्रीं
मनः [कूटः]—डलखलहक्षखमव्य्रऊं
मनोभूः / मन्मथः } क्लीं
महद्—प्रूं
महती—?
महाकालः—?
महाक्रोधः—क्ष्रूं
महापुरुषः—?
महाप्रलयः—[?]
महाप्रेतः—[?]
महाबीजम्—क्ष्रूं
महारुद्रान्तमस्तकः—[?]
महारुषः—क्ष्रूं
महाव्रतम् [कूटः]—स्हक्षमह्लक्षग्लीं
महासूया—क्षूं, णूं [?]
महासेनः–[?]
मही—लं
मा—श्रीं
मातृका / माता } पौं
मानसम्—ठ्रीं
माया / मायिकः } ह्रीं
मारः—क्लीं
मारः [कूटः]—?
मार्जारः [कूटः]—?
माहेन्द्रः [कूटः] –?




द्र० महाकाल संहितायाः कामकलाखण्डस्य षष्ठपटले
श्लोकाः २२-३०, पृ० ५६-५७।

# परिशिष्टम् (४)

## महाकालसंहिताय : कामकलाखण्डे समागतानां बीजानां कूटानाञ्च वर्णानुक्रमात्मको कोषः ।

अग्निः—रं

अग्निजाया—
अग्निवल्लभा—
अग्निस्त्री
अग्न्यङ्गना—
} स्वाहा

अङ्कुशः—क्रों

अङ्गना—स्त्रीं

अतिचण्डः—[?]

अतिचण्डा—[?]

अतिप्रेतः—[?]

अधरः—ऐं

अधोदतः
अधोदन्तः
अधोरदः
} ओं

अध्वा—ह्रां

अनङ्गः—क्लीं

अनन्तः—ख्रौं

अनलभाविनी
अनलाङ्गना
} स्वाहा

अनाख्या—[कूटः] क्षस्हम्लवयरऊं

अनाहत— हसख्फ्रां

अनेहसः—जूं

अप्सरसः—गां

अबला—स्त्रीं

अमरः—म्लैं

अमृतम्—ग्लूं

अमृतम् कूटः- [?]

अश्वमेधः [कूटः] ह्लस्लह्मकह्लीं

असूया—णीं

अस्त्रम्—फट्

अस्थिभेदी—ठं

आकाशः—हं

आगमः— ओं [?]

आगमशीर्षः—ओं

आग्नेयः [कूटः]—रक्षम्लह्लकसछव्य्रऊं

आग्नेयास्त्रम् [उपकूटः]—रम्लव्रीं

आज्ञा [कूटः]—क्षरह्म्लव्य्रईऊं

क्षस्हम्लव्य्रईऊं

आनन्दः [कूटः]—स्हलकह्लक्ष्रूं

आनन्दः—भ्रूं

आद्य [सृष्टिबीजम्]—हसखफ्रूं

आधारः—म्रैं

आमर्षः—हूं

आमृतम्—ग्लूं

आस्यम्—आं

इन्द्रः [बीजम्]—[?]

इन्द्रः ]कूटः] रक्षलह्लमसहकब्रूं, लम्लव्रीं

इन्द्रस्वरः—औ
इष्टिः [कूटः]—[?]
इष्टिः— रखीं
ईशः [कूटः]
ईशानः [कूटः]—ग्रफम्लम्लफ्लऊं
इर्ष्या—षीं
उग्रः—ठ्रीं
उत्तमाङ्गम्—स्वाहा
उदुम्बरः— म्रीं
उमा [कूटः]—[?]
ऊर्ध्वदन्तः—ओ
ऋषिः [कूटः]—[?]
ऐडः [कूटः]—शम्लव्मई, रलहृक्षकलसहफूं
ओष्ठः—ए
कन्दर्पः—क्लीं
कपालः—भ्रीं
कमला—श्रीं
कर्णिका—क्षरह्रीं
कला—ई
कल्पान्तः—हसफीं
कवचम्—हूं
काकिनी—फीं
कापालः—भ्रीं
कामः—क्लीं
कामः [कूटः]—[?]
कामलम्—श्रीं
कामाङ्गना [रतिः]—क्लूं
कामिनी—स्त्रीं
काम्यः [कूटः]—[?]
कालः—जूं
कालः [कूटः]—यम्लव्रीं
कालरात्रिः—खफीं
कालिका
काली
कालीयः
} क्रीं
किरीटी [कूटः]—[?]
कुण्डलः [कूटः]—रक्षक्रींऊं
[कुण्डलिनी]
कुमारः—
कुमारकः—
} ह्रूः
कुलाङ्गना—ह्रीं
कुलिकः—स्हौः
कुलिका—क्ष्स्त्रीं
कूर्चः—हूं
कूर्चः [कूटः]—[?]
कूर्मः—ध्रीं, तीं,
कूष्माण्डी—क्रीं
कृत्या—हस्खफ्रीं
कृष्णभार्यका—श्रीं
कोणः—रीं
कौरजः—खं
क्रमः—भ्रीं, क्ष्रीं,
क्रूरः—रद्रीं, सि,
क्रोधः—हूं
क्रोधीशः—[?]
खम्—हं
खेचरः [कूटः]—?
खेचरी—ब्लौं
खेचरी [कूटः]—सखक्लक्षमध्रयब्लीं
खेदकः—ह
क्षमा—ज्रूं
क्षेत्रपः—
क्षेत्रपालः—
} क्षौं

क्षोणी—लं
क्ष्वेडः—ज्रं
गजघटा [कूटः]—[?]
गणपः— } गं
गणपतिः— } गं
गरुत्मत्—क्रौं
गान्धर्वः—स्फ्रौं
गायत्रीमुखम्—ओं
गारुडः—क्रौं
गुह्यम्—ब्रच्रीं
गुह्या—क्ष्लप्रैं
गौरी—क्रः
ग्रहः [कूटः]—[?]
घण्टिका—रफ्लीं
घनः—क्लौं
चक्रः [कूटः]—रक्षब्रभ्रध्रम्लऊं
चञ्चुः—रस्फ्रों
चण्डः—फ्रों
चण्डेश्वरः—[?]
चतुर्थस्वरः—ई
चतुर्दशस्वरः—औ
चन्द्रः—ग्लौं
चन्द्रः [कूटः]—सकहलमक्षब्रूं
चामुण्डा—क्रैं
चामुण्डा [कूटः]—[?]
चूडा—स्वाहा [?]
चूडामणिः—रक्रीं, रक्रीं
चैतन्यम्—ऐं
जम्भः—रफीं
जयः—क्रं
जलदः—क्लौं
जाया—स्त्रीं
ज्येष्ठः—द्रूं
डाकिनी—ख्फ्रें
डाकिनी [कूटः]—मह्लक्ष्लव्य्रऊं
तत्त्वम्—स्हैं
तडित्—क्लौं
ताण्डवी [कूटः]—म्लब्रमई
तात्पुरुषः [कूटः]—क्षमव्लहकयह्लीं
तापिनी—म्रां
तारः—ओं
तारकः—ओं, रां,
तार्तीयकः—ह्रीं (?)
तुङ्गः—रच्रीं
तुङ्गः (कूटः)—(?)
तृतीयः—ह्रीं (?)
त्रपा—ह्रीं
त्रिकूटा—ल्यूं
त्रिपुटा—प्लूं
त्रिशक्तिः—क्रूं
त्रिशिखा—क्रीं
त्रिशूलः (कूटः)—(?)
त्रेता—ह्सखफ्रें
त्वरिता (कूटः)—(?]
त्वष्टा—क्र्ग्रौं
दक्षनेत्रकम्—इं
दक्षस्कन्धः—क
दक्षिणचक्षुः—इं
दक्षिणा—रफ्रें
दण्डः—ह्रां
दस्रः—ब्लीं
दानवः—श्रीं

दिवाकरः (कूटः)—म्लकह्लक्षरस्त्रीं
(अथवा) नदक्षटक्षव्म्रईऊँ
दीर्घतनुच्छदः (कवचम्)—हूं
द्रावणः—ह्भ्रीं
द्वादशाहः (कूटः)—क्षलह्क्षम्लव्रीं
द्वादशिका—ऐ
धनदा—क्ष्रूं
धरा—लं
धरा(कूटः)—ग्लक्षकमह्लव्य्रऊँ
धर्मः—क्रौं
धर्म्यः—(?)
धृतिः—क्ष्रौः
ध्यानम्—वूः
ध्रुवः—यों
नकुलीशः—ह (?)
नक्षत्रम्—व्लें
नक्षत्रम्(कूटः)—?
नन्दनम्—ह्लौं (?]
नभः—हं
ना—पां
नाकुलम्—व्रीं
नागः—व्रीं, तां,
नादः—अं
नारसिंहः—क्ष्रौं
नालीकम्—क्षरस्त्रीं
निरञ्जनम्—स्हीं
निर्मलम्—ज्लूं
निशा(कूटः)—?
नीलः—फ्रौं
नृसिंहः—ध्रौं
नृसिंहः [कूटः]—क्षम्लव्रसहस्ह क्षक्लंस्त्रीं

पङ्क्तिः—रध्रीं
पदवी—?
पद्मम् [कूटः] म्लव्य्र वऊं
पद्मा—श्रीं
पन्नगः—तां, व्रीं
पयः—वं [?]
परः— ?
'रमात्मीयम्—तत्त्वमसि
परा [कूटः] सहवलह्रीं
परापरः—ह्सखफ्रं
परापरः [कूटः] ह्स्लक्षकमह्लव्रूं
पविः—ध्रीं
पावित्रम्—?
पाशः—आं
पाशुपतम् [कूटः]—सग्लक्षमह्रह्लूं
पार्श्वम् [कूटः] ?
पित्सम् [कूटः]—?
पिनाकीशः— क्षरस्त्रां, खफ्रीं, [?]
पिशाचः—ठः
पीयूषम्—ग्लूं
पुण्डरीकः [कूटः]—फ्लक्षह्लस्हव्य्राऊं
पैशाचः—ठः
प्रणवः—ओं
प्रभा—ह्लीं
प्रमदा—स्त्रीं
प्रलयः [कूटः]—स्ह्क्षम्लव्य्रऊं [?]
प्रलयः—ह्सफ्रीं, ह्सफ्रों
प्रतुङ्गः—[कूटः]—?
प्राभातिकम्—[कूटः]—?
प्रासादः—ह्रौं
प्रेतः—स्हौः

फेत्कारी—हसखफ्रें
वह्निरथ [कूटः]—क्षलहक्षम्लक्लीं
बलिः—रछ्रीं
बाला—क्षस्रीं
बाला [कूटः]—[?]
बृहद्—[?]
बृहद् [कूट]—स्हकह्ललह्लीं
ब्रह्म—ठौं
ब्रह्म [कूटः]—क्लक्षह्लव्रमयऊं
अथवा क्ष्लफ्लों
ब्रह्मनिर्मितम्—[सृष्टिः] रक्षखरऊं
ब्रह्मा—डों
व्रीडा—ह्लीं
भगः— ?
भस्मली— ?
भारुण्डा—प्रीं
भारुण्डा [कूटः]—क्षहलीं
भासा [कूटः]—क्षह्लम्लव्य्रऊं
भासा—व्रफथ्रूं
भीरुः—स्त्रीं
भुजगः—तां, व्रीं
भुवनेशी } ह्रीं
भुवनेश्वरी
भूतः—स्फों
भूतिनी—ख्फ्रीं
भूमिः—लं
भैरवी—सौः
भैरवी [कूटः]—क्षमक्लह्लहसव्य्रऊं
भोगः—हसखफ्रीं
भोजङ्गमः—तां, व्रीं
भौतम् } स्फ्रों, रलहक्षफ्रूं
भौतकम्

मणिः [कूटः]—भक्लरमहसखफ्रूं
मणिमेखला— [?]
मत्स्यम् [कूटः]—[?]
मदनः—क्लीं
मनः—ठ्रीं, हीं
मनः [कूटः]—डलखलहक्षखमव्य्रऊं
मनोभूः } क्लीं
मन्मथः
महद्—प्रूं
महती—?
महाकालः—?
महाक्रोधः—क्ष्रूं
महापुरुषः—?
महाप्रलयः—[?]
महाप्रेतः—[?]
महावीजम्—क्ष्रूं
महारुद्रान्तमस्तकः—[?]
महारुषः—क्ष्रूं
महाव्रतम् [कूटः]—स्हक्षमह्लक्षरलीं
महासूया—क्ष्रूं, णूं [?]
महासेनः—[?]
मही—लं
मा—श्रीं
मातृका } पौं
माता
मानसम्—ठ्रीं
माया } ह्रीं
मायिकः
मारः—क्लीं
मारः [कूटः]—?
मार्जारः [कूटः]—?
माहेन्द्रः [कूटः]—?

माहेश्वरः [कूटः]—क्वलह्लझकह्लनसक्लईं

मीनकेतनः } क्लीं
मीनध्वजः }

मुक्ता—क्ष्रीं

मुखम्—आं

मेखला—रक्ष्रीं

मेघः—क्लौं

मेदिनी—लं

मेधा—ऐं

मैंधः—ऐं

यक्षः—क्ष्लौं

याम्यम् [कूटः]—हम्लव्रीं

योगः—रध्रूं

योगिनी—छ्रीं

योगिनी [कूटः]—[?]

योषित्—स्त्रीं

रतिः—क्लूं

रतिप्रियः—क्लीं

रथन्तरः—म्रूं

रमा—श्रीं

राथन्तरः—म्रूं

रामा—स्त्रीं

रावः—फ्रं

रुक्—हूं

रुद्रः—फहलक्षां, द्रैं,

रुद्रस्वरः—ए,

रुषः } ह्रूं,
रोषः }

रौद्रः } द्रैं
रौद्रकः }

रौद्रः [कूटः]—सहठलक्षह्लमक्रीं

लक्ष्मी—श्रीं

लज्जका } ह्रीं
लज्जा }

लाङ्गूलम्—हफ्रीं

वक्त्रम्—भ्रीं, आं,

वगला [कूटः]—[?]

वज्रम्—ध्रीं

वधूः—स्त्रीं

वधूः [कूटः]—[?]

वनिता—स्त्रीं

वराहः [कूटः]—म्लक्षकसहह्लूं

वह्निः—रं

वह्निकामिनी }
वह्नि जाया }
वह्निनारी }
वह्निनितम्बिनी } स्वाहा
वह्निपत्नी }
वह्निभार्या }
वह्निवल्लभा }
वह्निसुन्दरी }

वाक्—ऐं, जौं, ति,

वाक्यांशः—?

वाग्भवः }
वाग्वादिनी } ऐं
वाणी }

वामकर्णः—ऊं

वामदेवः [कूटः]—रजहलक्षमऊं

वामनेत्रम्—इं

वामश्रुतिः—ऊं

वामाक्षि } इं
वामेक्षणम् }

वायवीयम् [कूटः] } क्षम्लकस्हरयब्रूं
वायुः [कूटः] }

वायुः—यं
वाराहिकः [कूटः]—म्लक्षकसहहॢं
वारुणः—वं
वारुणः [कूटः]—ह्रहलव्य्रकऊं
विघ्नः—पलक्रों
विद्युत्—ब्लौं
विधिः—क, ब्रूं,
विरिञ्चिः—ब्रूं
विशुद्धिः—ह्लैं
विश्वजित् [कूटः]—क्षक्षक्लफचक्षक्षौं
विषम्—ज्र
विषम् [कूटः]—?
विष्णुजाया }
विष्णुनितम्बिनी } श्रीं
विष्णुवल्लभा }
वेतालः—सफलक्षूं
वेदमस्तकः }
वेदशिरः } ओं
वेदादिः }
वैद्युतम्—ब्लौं
वैधः—क, ठौं, डों, रक्षछ्रीं,
वैश्वानरवधूः }
वैश्वानराङ्गना } स्वाहा
वैष्णवम् [कूटः]—ग्लफक्षफक्ष्रीं
वैहायसम् [कूटः]—हलक्षकमह्लसव्य्रऊं
व्यूहः [कूटः]—कम्लक्षसहब्लूं
व्योम [कूटः] क्ष्लह्लमव्य्रऊं
व्योम—ह
शक्तिः—ब्लूं
शक्तिः [कूट]—झसखव्य्रमऊं
शक्रस्वरः—औ
शंखः—ग्लां

शङ्खः [कूटः]—[?] सलहक्षव्रठक्षआं
शम्भुः [कूटः]—स्हजहलक्षम्लवनऊं
शम्भुवल्लभा—क्रः
शाकिनी—फ्रें
शांकरः—?
शांकरः [कूटः] लक्षमह्लजरक्रव्य्रऊं
शाङ्करी [कूटः]—?
शाम्भवः—क्षरस्त्रां, खफ्रीं
शाम्भवः—[कूटः]—स्हजहलक्षम्लवनऊं
शिरः }
शीर्षः } स्वाहा
शृङ्खला—क्षरहॢं
श्रीः—श्रीं
श्रीकण्ठः [कूटः]—क्लक्षसहमव्य्रऊं
श्मशानम् [कूटः]—[?]
षष्ठस्वरः—ऊ
सदाशिवः—[?]
सद्योजातः [कूटः]—हक्लह्लवडकखऐं
सन्धिः (कूटः)—(?)
समाधिः—ह्रैं
सर्पः—व्रीं, तां
सर्पः (कूटः)—म्लकह्लक्षरस्त्रैं
संविद्—फें
संहारः—हसफ्रौं
संहारः (कूटः)—स्हक्षम्लव्य्रऊं
सानुः—रह्रीं
सानुः (कूटम्) ?
सारङ्गः (कूटः)—?
सारस्वतम्—ऐं
सार्णः—क्रों
सिद्धः (कूक्षः)—क्लह्लवनगक्षरछ्रीं

सिद्धिः—क्रां
सिंहः—णूं
सुदर्शनः—स्कीं
सुधा—ग्लूं
सुन्दरी—स्त्रीं
सुरतपिनी—?
सूर्यः—सः
सृणिः- क्रों
सृष्टिः—ह्सखफ्रूं
सृष्टिः (कूटः)—रक्षखरऊं
सोमः—सकह्लमक्षखव्रूं
सौत्रामणिः (कूटः)—ग्लरक्षफथरक्लीं
सौपर्णः—क्रौं
स्त्री—स्त्रीं
स्थाणुः—उं
स्थितिः—(कूटः) रक्षक्रूं
स्मरः—क्लीं
स्वर्णम् (कूटः)
सुवर्णम् (कूटः) } क्लीं श्रीं घ्रीं

हयग्रीवः—क्रूं
हरपत्नी
हराङ्गना } क्रः
हरिजाया—श्रीं
हरिपुत्रः—क्लीं
हरिसुन्दरी—श्रीं
हर्षः—हें
हंसः (कूटः) ब्लहतह्नसचैं
हंसी (कूटः)—?
हाकिनी—रक्षश्रीं
हारः—ह्लक्षम्लैं
हार्दम्—नमः
हिरण्यगर्भः (कूटः)—क्षरहग्लव्यईं
हृत्
हृदयम् } नमः
हृल्लेखा—?
हेतुः—ऐं
ह्रीः—ह्रीं

———

# परिशिष्टम् (५)

## विशिष्टशब्दसूची

फ



ब

भ

## ल

---

# शुद्धिपत्रम्

| पृष्ठम् | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ७ | ३ | युगाधः | युगधः |
| १० | १३ | ०संस्थाभ्या | ०संस्थाभ्यां |
| १४ | १७ | ह्ल | ह्ल् |
| २१ | ८ | ०रलंकताम् | ०रलंकृताम् |
| २३ | २१ | दत्वा | हुत्वा |
| २४ | ६ | बलिमति | बलिमिति |
| ३५ | १६ | ससार | संसार |
| ३६ | १० | विघोऽय | विघोऽयं |
| ४० | १० | २४ | २५ |
| ४१ | ६ | ठद्वयान्ता | ठद्वयान्तो |
| ४२ | ५ | यीगिनीति | योगिनीति |
| " | ८ | स्वयभू | स्वयंभू |
| ४३ | २० | चिन्मये | चिन्मयि |
| ४४ | ६ | मडल | मण्डल |
| ४५ | १७ | तार्था | तीर्था |
| ४६ | ५ | प्रपूजयेत् | प्रपूरयेत् |
| " | १५ | विष्णुक्रन्ता | विष्णुक्रान्ता |
| ४८ | १६ | वंहू | बंहु |
| " | २० | वृन्दै | वृन्दै |
| ५० | २ | गोडीं | गौडीं |
| ५१ | ४ | १३२ | १३३ |
| " | १२ | २३७ | १३७ |
| ५२ | १२ | १४३ | १४५ |
| ५३ | १ | प्रयोगागतसुन्दरीणां | मूलदेव्याः |
| ५४ | ४ | चंतुविशति | चतुर्विंशति |
| ५५ | १३ | दृष्टवा | दृष्ट्वा |

| पृष्ठ | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ५६ | ४ | १० | १७ |
| ५७ | ८ | बज्राठ्यं | वज्राढ्यं |
| ६१ | ५ | पलास | पलाश |
| ६४ | ८ | घार | घोर |
| ६५ | १३ | एव | एवं |
| ,, | १६ | पुंगव | पुंगवः |
| ६६ | १६ | प्रति०क्षण | प्रतिक्षण |
| ७० | ६ | मार्करीं | मार्कवीं |
| ७५ | १० | १२ | १३ |
| ७७ | १८ | ३६ | ३७ |
| ७८ | ५ | कर्प्पूरै | कर्प्पूरैः |
| ८१ | ६ | होमनाधिकार | होमानधिकार |
| ८५ | २० | पादाङ्गष्ठाङ्ग | पादाङ्गुष्ठाङ्ग |
| ८६ | १६ | महात्म्या | माहात्म्या |
| ६२ | १४ | २६६ | १६६ |
| ६५ | १ | पाथिवर्षयः | पार्थिवर्षयः |
| ,, | ८ | पैठीनसिवीतंहव्यः | पैठीनसिर्वीतहव्यः |
| १०० | १५ | वस्त्रायुध | वज्रायुध |
| ,, | १८ | विद्युज्जिह्वा | विद्युज्जिह्वो |
| ,, | ,, | घोरदंष्ट्रा | घोरदंष्ट्रो |
| ,, | २० | प्रदीपो | प्रदीप्तो |
| १०८ | १५ | चित्ताग्नि | चिताग्नि |
| ११० | ७ | स्वरात् | स्वरान् |
| ,, | पादटि | १७५-१७६ | १७६-१७७ |
| ११२ | ५ | प्रतिष्ठतः | प्रतिष्ठितः |
| ११५ | १२ | रत्नपाठोपरि | रत्नपीठोपरि |
| ११८ | १ | अर्थाकर्णय | अथाकर्णय |
| १२० | १४ | सवोपरि | शवोपरि |
| १२४ | २० | अब्धा | अब्धौ |
| १२५ | ५ | खड्ग | खड्गं |

| पृष्ठ | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १२५ | १० | रत्नमौलि | रत्नमौलिं |
| १२९ | १० | वितानंरूप | वितानैरूप |
| ,, | १५ | निमितं | निर्मितं |
| १३० | १४ | परशिवाक | परशिवाङ्क |
| १३७ | ४ | भगान्तिके | भगाङ्किते |
| १४४ | ७ | पदयुगं | पतयुगं |
| ,, | ८ | काला | काली |
| १४५ | १६ | चाद्धृत्य | चोद्धृत्य |
| १४८ | २१ | दक्षिणम | दक्षिणेन |
| १४९ | १९ | जगस्थिति | जगत् स्थिति |
| १५१ | ४ | च्छलद्ङगा | च्छलद्गङगा |
| ,, | १५ | भुङ्गि | भृङ्गि |
| १५५ | १८ | रावास्ता | रावान्ता |
| १५६ | १९ | सहाम्नायनिकस्य | महाम्नायनिकस्य |
| १५६ | ३ | नरीप्युपासिता - | मरीच्युपासिता |
| १५९ | १५ | कुप्यान्नमेन्न | क्रुध्यान्नमेन्न |
| १६० | १ | कवचस्यवतरणम् | कवचस्यावतरणम् |
| ,, | २२ | फलाभिधानम् | माहात्म्यनिर्देशः |
| १६२ | ६ | करालिनं | करालिनी |
| १६५ | ९ | सवर्तो | संवर्तो |
| १७६ | १३ | हृत्यां | हृत्या |
| १८४ | २५ | नानाप्रयोगकथनं | अमृतन्यासो |
| १९० | ३ | नागहाग | नागहारा |
| १९५ | ५ | माध्वा | माध्वी |
| २०३ | ११ | वाञ्छितं | वाञ्छितं |
| २०४ | ३ | ह्रीं | ह्रीं |
| २०५ | १४ | फत्कारी | फत्कारी |
| २०९ | ४ | मेधा | मेधा |
| २१० | १४ | त्तितयं | द्वितयं |
| २११" | ८ | क्षेत्रप्रचण्डी | क्षेत्रपचण्डी |

| पृष्ठम् | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २२१ | १४ | यागिनी | योगिनी |
| २२४ | ३ | सर्वलोकमुमे | सर्वलोकममुंमे |
| २२५ | ६ | विभूषितः | विभूषितम् |
| २२७ | २२ | क्राधास्त्वं | क्रोधास्त्वं |
| २२८ | १ | हृदये | हृदयं |
| " | १४ | प्रस्ताविनि | प्रस्तारिणि |
| २२९ | १३ | कटमुत्तमम् | कूटमुत्तमम् |
| " | १५ | कूटेश्वरी | कूटेश्वरि |
| २३० | ५ | शाघ्र | शीघ्रं |
| २३२ | १६ | महिषमदिनि | महिषमर्दिनि |
| २३३ | २२ | पुरा | त्रिपुरा |
| २३४ | २२ | द्विषां | द्विषान् |
| २३५ | ११ | पठ | पच |
| २३५ | १२ | विध्वसय | विध्वंसय |
| " | १५ | स्मराङ्गणे | स्मराङ्गने |
| " | १७ | महाक्षोभकारिणी | महाक्षोभकारिणि |
| २३८ | १६ | पुजयामि | पूजयामि |
| २४६ | २२ | परि | पवि |
| २५० | १५ | भाविनि | भाविनी |
| २५३ | १७ | पाशकाले | पाशकले |
| " | २० | पदं | प्रदे |
| २५५ | १७ | शवारूढ | शवारूढे |
| " | १६ | संविः | संवित् |
| २५७ | २३ | रामा | रमा |
| २६० | १५ | काव्यं | कायं |
| २६३ | ३ | मारुडण्स्थो | मारुण्डस्थो |
| २६५ | १७ | रहस्यकाली | रहस्यकालि |
| २७० | १ | तिष्ठन्तु | तिष्ठतु |
| २७१ | १ | प्रचण्डचण्ड | प्रचण्डचण्डे |
| " | २२ | वितती | वितते |

